अतुलं असदृशं भद्रं मङ्गळम् । ''श्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभं '' इत्यमरः । उन्निद्रयेत् जागरितं कुर्यात्। उत्पूर्वात् निद्र धातोर्लिङ् ॥

स्वभावोक्तिरलंकारः । ''स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् '' इति तल्लक्षणोक्तेः । वृत्तं तु स्रग्धरैव ॥९॥

**धूतावद्यैरविद्याविघटनपटुभिर्विद्वदभ्यर्थनीयै -**
**र्वाचः प्राचां प्रवाचामुपचयमभजन् यत्कृतग्रंथजातैः ॥**
**संख्यावंतो यमाहुर्मुहुरखिलकलामूर्तिमुद्वेलकीर्ति -**
**र्धीरश्रीराघवेन्द्रः स दिशतु सततं भव्यमव्याहतं नः ॥९॥**

**व.व्या.**:- इदानीं स्तुत्यत्वेनाभिमतं राघवेन्द्रस्वामिनं स्तौति ॥ धूतेति ॥ धूतानि अवद्यानि यैस्ते तैः, अविद्यायाः = अज्ञानस्य, विघटने =वियोजने, पटुभिः = समर्थैः, विद्वद्भिः = पंडितैः, अभ्यर्थनीयैः = अपेक्षणीयैः, येन= श्रीराघवेन्द्रेण, कृतैः ग्रंथजातैः= ग्रंथसमूहैः, प्रकृष्टाः वाचः = वचनानि येषां ते प्रवाचाः तेषां, प्राचां= आर्याणां, वाचः = वाक्यानि, उपचयं = पुष्टिं, अभजन् = प्राप्नुवन्, संख्यावंतः = ज्ञानिनः, यं श्रीराघवेन्द्रं अखिलाश्च ताः कलाः विद्याश्च ता एव मूर्तिः = शरीरं यस्य सः तादृशं आहुः , सः उद्वेलकीर्तिः धीरश्चासौ श्रीराघवेन्द्रश्च, नः = अस्माकं , अव्याहतं = स्थिरं, भव्यं= मंगळं , सततं = प्रतिदिनं , दिशतु = ददातु ॥९॥

**ज.व्या.**:- प्रकृतग्रंथप्रतिपाद्यश्रीराघवेन्द्रतीर्थश्रीपादान्प्रार्थयते ॥ धूतावद्यैरिति ॥ धूताः समुज्झिताः अवद्याः दोषाः यैस्ते तथोक्ताः तैः। अविद्याविघटनपटुभिः अविद्यायाः अज्ञानस्य, विघटने विदारणे,

पटुभिः समर्थैः । ''अथाज्ञानमविद्याहंमतिस्त्रिया'' मित्यमरः । विद्वदभ्यर्थनीयैः विद्वद्भिः विपश्चिद्भिः, अभ्यर्थनीयैः अभि अभितः अर्थनीयैः । '' विद्वान् विपश्चिद्दोषज्ञः'', ''यांचा भिक्षार्थनाऽर्दना'' इति चामरः । यत्कृतग्रंथजालैः येन श्रीराघवेन्द्रगुरुणा कृतैः रचितैः, ग्रन्थजालैः ग्रंथानां प्रबन्धानां जालैः समूहैः । ''जालं समूह आनायो'' इत्यमरः । प्रवाचां प्रकृष्टवाक्शालिनां प्रवचनशीलानामिति यावत्। प्राचां प्राचीनानां पुरातनानामिति यावत् । वाचः व्याख्यान-रूपवचनानि उपचयं प्रवचनादिना प्रसिद्धिं अभजन् प्राप्तवन्तः । भज् सेवायामिति धातोर्लङ् । संख्यावन्तः शास्त्रविचारणा येषामस्तीति तथोक्ताः । ''चर्चा संख्या विचारणे''ति, ''संख्यावान् पंडितः कविः'' इति चामरः । यं श्रीराघवेन्द्रगुरुं, अखिलकलामूर्तिं समस्तविद्यातनुं, मुहुः शश्वत्, आहुः । उद्वेलकीर्तिः उत्क्रांता मर्यादां उद्वेला, कीर्तिः यस्य सः तथोक्तः । धीरश्रीराघवेन्द्रः श्रिया कांत्या युक्तो राघवेन्द्रः श्रीराघवेन्द्रः, धीरश्चासौ श्रीराघवेन्द्रश्च । एतादृशगुणः सः, सततं निरंतरं, अव्याहतं प्रतिहतिरहितं, भव्यं क्षेमं नः अस्माकं, दिशतु दद्यात् । ''दिश् अतिसर्जने'' इति धातोर्लोट् ॥

इह अखिलकलामूर्तित्वेन निरूपणात् रूपकालङ्कारः । ''विषय्यभेदताद्रूप्यरंजनं विषयस्य यत्'' इति तल्लक्षणात् ॥१०॥

**ये रामव्यासपादप्रणिहितमनसो मध्वतन्त्रप्रतिष्ठा-**
**धुर्यामर्यादबोधाः फणिपतिभणितिप्रौढकेलिप्रतोली ॥**
**मीमांसातर्कजन्मक्षितिरथ कवितारीतिवर्त्मप्रतीत -**
**प्रागल्भास्तानुपेन्द्रव्रतिविबुधमणीन् दैशिकानाश्रयेऽहम् ॥१०॥**

**व.व्या.**:- स्वस्य प्रणवमंत्रोपदेष्टॄन् स्वात्मानं वैष्णवसिद्धांत-परिपालने अभिषेक्तॄन् उपेन्द्रश्रीमच्चरणानुपास्ते ॥ य इति ॥ रामव्यासपादे प्रणिहितं = स्थापितं मनः येषां ते तथोक्ताः । मध्वतन्त्रस्य प्रतिष्ठापनं, तत्र धुर्यः = भारवाहकः, अमर्यादः = मर्यादाशून्यः, बोधः = ज्ञानं येषां ते तथोक्ताः। ये फणिपतेः = शेषस्य, भणितिः = भाषणं, तस्य या प्रौढिः, तस्याः या केलिः = लीला, तस्याः प्रतोली = वीथिः ॥ वेदाः प्रमाणमितिवदुद्देश्यविधेयभावः ॥ मीमांसातर्कशास्त्रयोः जन्मभूमिः, अथ = किञ्च, ये कवितायाः रीतेः = प्रकारस्य, वर्त्म = मार्गः, तेन प्रतीतं = अवगतं, प्रागल्भं = उत्तमत्वं येषां ते तथोक्ताः तान्, उपेन्द्रव्रतिनश्च ते विबुधमणयः = ज्ञानिश्रेष्ठाश्च तान्, दैशिकान्, अहं आश्रये = संश्रितोऽस्मि। श्रिञ् सेवायामित्यतो लट् ॥१०॥

ये रामव्यासपादप्रणिहितमनसो मध्वतन्त्रप्रतिष्ठा-
धुर्यामर्यादसंवित् सुमहितसुमतीन्द्रार्यशिष्याग्रगण्याः।
नित्यत्रय्यन्तचिंतापरिणतविशदाशेषतत्वावबोध-
प्रख्यातान् तानुपेन्द्रव्रतिविबुधमणीन्दैशिकानाश्रयेऽहम् ॥११॥

**ज.व्या.**:- स्वसंस्थानगुरून्प्रार्थयते ॥ ये रामेति ॥ रामव्यासौ मूलरामवेदव्यासौ, तयोः पादेषु अंघ्रिषु, प्रणिहितं प्रकर्षेण निहितं मनो येषां ते तथोक्ताः । "पादाग्रं प्रपदं पादः" इत्यमरः । मध्वस्य श्रीमदाचार्यस्य, तन्त्रं सिद्धान्तः, तस्य प्रतिष्ठायां प्रतिष्ठापने सिद्धान्तस्थापन इत्यर्थः । धुर्या धुरीणा । अमर्यादा न विद्यते मर्यादा मितिर्यस्याः सा तथोक्ता । सा च संवित् ज्ञप्तिः, तया सुमहिताः सुष्ठु पूजिताः। मह पूजायामिति धातोः। सुमतीन्द्रार्याः

सुमतीन्द्रस्वामिनः, तेषां शिष्याग्रगण्याः शिष्येषु अग्रगण्याः प्रथमतः गणनीयाः। ''धूर्वहि धुर्यधौरेय'' इति, ''प्रेक्षोपलब्धिश्चित्संवित्'', ''स्यादार्यः स्वामिवैश्ययोः'' (?) इति चामरः। ये इति पूर्वेणान्वयः ॥ नित्यत्रय्यंतेति ॥ नित्यं अनवरतं, त्रय्यंतानां वेदांतानां उपनिषदामिति यावत्। चिंतायां विचारणे, परिणतः परिनिष्ठितः, विशदः निर्मलः, अशेषतत्वानां समस्तेशलक्ष्मीब्रह्मादितत्वानां अवबोधः ज्ञानं, तेन प्रख्यातान् प्रसिद्धान्, तान् पूर्वोक्तगुणयुक्तान् उपेन्द्रयतिविबुधमणीन् उपेन्द्रसंयमिश्रेष्ठान्दैशिकान् गुरून् अहं आश्रये। आङ्पूर्वात् श्रिञ् सेवायामितिधातोः लडात्मनेपदोत्तम-पुरुषैकवचनम्। वृत्तं तु स्रग्धरैव ॥११॥

**योगो यः कर्मनामा कविभिरभिहितो यश्च विज्ञानसंज्ञः**
**शक्तो नासिद्धकायस्तनुमतिरनयोस्तावदावर्जनेऽहम् ॥**
**यश्चोपायैरुपेयः स्थिरफलविधये दैशिकस्य प्रसाद -**
**स्तस्मै तस्य स्तुवीयानिशमपि चरितं राघवेन्द्रव्रतीन्दोः ॥११॥**

**व.व्या.**:- श्रीराघवेन्द्रस्तवनस्य पुरुषार्थसाधनत्वादेव कर्तव्यत्वे पुरुषार्थसाधनयोर्ज्ञानकर्मणोः सत्वात्तौ विहाय किं गुरुस्तवनेनेत्यत आह ॥ योग इति ॥ कविभिरभिहितः कर्मनामा यः योगः विज्ञानसंज्ञश्च योगः, अनयोः = कर्मज्ञानयोः, आवर्जने = संपादने, असिद्धकायः = रोगिशरीरः, तनुमतिः = अल्पबुद्धिः, अहं, शक्तो नास्मि। स्थिरफलस्य = मोक्षस्य, विधये = प्राप्तये, यस्य दैशिकस्य= गुरोः, यः प्रसादः, उपायैः = साधनैः, उपेयः = साधनीयः, तस्मै= तद्गुरुप्रसादाय, राघवेन्द्रव्रतीन्दुरिव, तस्य चरितं

= चरित्रं , अनिशं = सर्वदा, स्तुवीय =स्तुतिं कुर्याम् । अहमिति वर्तते । ष्टुञ्= स्तुताविति लिङ् ॥११॥

**ज.व्या.**:- एवं दशभिः श्लोकैः इष्टदेवतागुरुपरंपराप्रार्थनारूपं मंगळमाचर्य उत्तरार्धेन स्थिरफलमोक्षार्थं गुरोः चरितं स्तुवीयेति प्रतिज्ञातुं निवृत्तकर्मादिप्रधानोपायान्तरप्रहाणेन अस्य स्तवने को हेतुरित्यत आह ॥ योगो य इति ॥ कविभिः पंडितैः । "संख्यावान् पंडितः कविः" इत्यमरः । यः कर्मनामा निवृत्तकर्माख्ययोगः । "योगः संनहनोपायध्यानसंगतियुक्तिषु" इत्यमरः । तस्यैव मुक्तिहेतुत्वात् । "निवृत्तं ज्ञानपूर्वं तु निष्काममिति चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माप्येति सनातनम्" इति श्रवणात् । यश्च विज्ञानसंज्ञः विशिष्टज्ञानाख्यः श्रवणादिजनितापरोक्षज्ञानरूपश्च, योगः उपायः , तस्यापि मोक्षसाधनत्वात् । "तमेवं विद्वानमृत इह भवती"ति श्रुतेः । अभिहितः आख्यातः । "उक्तं ..... आख्यातमभिहितमि" त्यमरः। "ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिना" मिति गीतोक्तेश्च । असिद्धकायः सिद्धः शुद्धः न भवतीत्यसिद्धः कायः यस्य सः तथोक्तः। इदं हेतुगर्भविशेषणम् । तन्वी स्वल्पा मतिर्यस्य सः तथोक्तः । इदमपि हेतुगर्भविशेषणम् । एतादृशोऽहमनयोः कर्मयोगज्ञानयोगलक्षणोपाययोः, आवर्जने संपादने । आङ्पूर्वस्य वृज् वर्जन इति धातोः परित्यागार्थस्यापि संपादनार्थता उपसर्गवशात् । "धातोरर्थान्तरविकल्पोसकृदि "त्युक्तेः । न शक्तः न समर्थ इत्यर्थः। असिद्धकायत्वात्कर्म-योगसंपादने , अल्पमतित्वात् ज्ञानयोगसंपादने न समर्थो भवामीत्यर्थः । तेन तदुभयप्रहाणेन गुरुचरितस्तवनं युक्तमिति भावः । दैशिकस्य गुरोः प्रसादात् । "प्रसादस्तु प्रसन्नता"

इत्यमरः, ''दैशिको गुरुराचार्यः'' । स्थिरफलविधये स्थिरफलस्य नित्यफलस्य मोक्षस्येति यावत् । तस्य विधये प्रापणाय, उपायैः अनादिगुरुभक्तिलक्षणसाधनैः उपेयः प्राप्यः, तादृशप्रसादार्थं, तस्य प्रसिद्धस्य स्तोतव्यत्वेन बुद्धिसंन्निहितस्य, राघवेन्द्रव्रतींदोः राघवेन्द्रव्रत्याख्यचंद्रस्य, चरितं अनितरसाधारणग्रंथकरणादि-माहात्म्यं, अनिशमजस्रं, अहं स्तुवीय स्तोत्रं कुर्याम् । ''ष्टुञ् स्तुता'' वितिधातोः लिङ् ।

अत्र असिद्धकायस्तनुमतिरित्यनयोः कर्मज्ञानयोगासक्तत्वाभि प्रायगर्भत्वात्परिकरालङ्कारः ॥१२॥

**एषः श्रीराघवेन्द्रव्रतिवरचरितांभोनिधिः क्वातिवेलः**
**क्वासौ खद्योतपोतप्रमुषितविभवश्चेतसो नः प्रकाशः ॥**
**वंध्यैवातः प्रतिज्ञा तदतुलनिखिलाश्चर्यचर्याभिधाने**
**स्थानेथापि क्वचित्स्यादिह पुनरुदधिस्नानसंकल्पवत्सा ॥१२॥**

**व.व्या.**:-कविरिदानीं राघवेन्द्रस्तवनप्रतिज्ञायाः अशक्यत्वमाशंक्य समाधत्ते ॥ एष इति ॥ अतिक्रांता वेला = मर्यादा यस्मात्सः, एषः= प्रसिद्धः, श्रीराघवेन्द्रव्रतिवरस्य यच्चरितं तदेवांभोनिधिः = समुद्रः, क्व ,खद्योतपोतैः = पतंगशिशुभिः , प्रमुषितः = अपहृतः, विभवः = वैभवं यस्य सस्तथोक्तः । असौ = अनुभवसिद्धः , अस्माकं चेतसः = अंतःकरणस्य, प्रकाशः = प्रभा, क्व, अतः = अतःकारणात् , तस्य = श्रीराघवेन्द्रगुरोः, अतुलाः = असदृशाः, निखिलाः, आश्चर्यचर्याः = चरित्राणि , तासां अभिधाने = कथने, प्रतिज्ञा= संकल्पः, वन्ध्यैव = वृथैव, अथापि स्थाने, उदधेः = समुद्रस्य ,

स्नानसंकल्प इव, इह = यत्किंचिच्चर्याभिधाने, सा = प्रतिज्ञा, अव्याहता = युक्तैवेत्यर्थः । अन्यथा सर्वसमुद्रस्नानस्याशक्यत्वे समुद्रैकदेशस्नानं यथा युक्तं तद्वत्किंचिद्गुरुचरित्रस्तवनं युक्तमिति-भावः ॥१२॥

**ज.व्या.**:-श्रीराघवेन्द्रगुरोर्माहात्म्यस्यापारत्वात् तद्वर्णनमशक्य-मित्याक्षिप्य समाधत्ते॥ एष इति ॥ अतिवेलः वेलां मर्यादामतिक्रांतः अतिवेलः मर्यादातिक्रांत इति यावत् । "अत्यादयः क्रांताद्यर्थे द्वितीयया" इति । "गोस्त्रियोरुपसर्जनस्ये" ति रूपम् । एषः प्रसिद्धः श्रीराघवेन्द्रव्रतिवरचरितांभोनिधिः श्रीराघवेन्द्रव्रतिवरस्य श्रीराघवेन्द्राख्ययतिश्रेष्ठस्य, चरितं चरित्रं, तदेवांभोनिधिः अंभसां निधिः उदकाश्रयः समुद्र इत्यर्थः। चरितांभोनिधिः क्व । अपारत्वात् स्तोतुमशक्य इति भावः । नः अस्माकं, चेतसः मनसः । "स्वांतं हृन्मानसं मनः" इत्यमरः । प्रकाशः। खद्योतपोतप्रमुषितविभवः खद्योतस्य ज्योतिरिंगणाख्यस्य कीटस्य पोतेन अर्भकेण प्रमुषितः अपहृतः विभवो वैभवं यस्य सः तथोक्तः । "खद्योतो ज्योतिरिंगण", "पोतः पाकोऽर्भको डिंभः पृथुकश्शावकः शिशुः" इति चामरः । क्व । अत्यल्पप्रकाश इति भावः । अपारमहिमावर्णने अशक्त इत्यर्थः । अतः, तदतुलनिखिलाश्चर्यचर्याभिधाने समस्ताद्भुतचरित्राख्या-भिधाने स्तवने । प्रतिज्ञा अस्मदीयप्रतिज्ञा वन्ध्यैव विफलैव । "वन्ध्योऽफलोऽवकेशी च" इत्यमरः । अथापि उदधिस्नान-संकल्पवत् समुद्रस्नानं करिष्यामीति संकल्पवत् सा प्रतिज्ञा इह चरितांभोनिधौ क्वचित्स्यात् । समुद्रैकस्थाने स्नानेन यथा संकल्पः सफलः स्यात् तथा तदेकदेशमाहात्म्यवर्णनेनापि अस्मदीय - प्रतिज्ञायाः सफलत्वमुपपद्यत इति भावः ॥

अत्र व्रतिचरितस्य उदधेः, स्नानसंकल्पस्य च प्रतिज्ञायाः सादृश्यवर्णनात् उपमालंकारः । ''उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरि'' ति तल्लक्षणात् । वृत्तं तु स्रग्धरैव ॥१३॥

**यद्भानौ यत्कृशानौ यदमृतकिरणे यद्ग्रहेषूदितेषु**
**ज्योतिर्यत्तारकासु प्रथितमणिषु यद्यच्च सौदामिनीषु ॥**
**संभूयैतत्समस्तं त्वदमितहृदयाकाशनिर्यत्प्रकाशे**
**धीरश्रीराघवेन्द्रव्रतिवर भजते हंत खद्योतरीतिम् ॥१४॥**

**ज.व्या.**:- पूर्वप्रतिज्ञातं श्रीराघवेन्द्रगुरुस्तवनं यद्भानावित्यादिश्लोकैर्वर्णयति ॥ यद्भानाविति ॥ भानौ दिवाकरे यत् ज्योतिः द्योतः प्रकाश इति यावत् । ''भानुर्हंससहस्रांशुस्तपनः सविता रविः'' ''ज्योतिर्भद्योतदृष्टिषु'' इति चामरः । कृशानौ अनले । यज्ज्योतिरिति सर्वत्रानुवर्तते । ''कृशानुः पावकोऽनलः'' इत्यमरः। यदमृतकिरणे सुधांशौ यज्ज्योतिः । ''विधुः सुधांशुश्शुभ्रांशुः'' इत्यमरः। उदितेषु अनस्तमितेषु ग्रहेषु अङ्गारकादिग्रहेषु यत् ज्योतिः, तारकासु नक्षत्रेषु यज्ज्योतिः, प्रथितमणिषु प्रसिद्धकौस्तुभादिमाणिक्येषु यज्ज्योतिः । ''प्रतीते प्रथितः ख्यातः'' इत्यमरः । सौदामिनीषु विद्युत्सु यज्ज्योतिः । ''तडित्सौदामिनी विद्युत्'' इत्यमरः । एतद्भान्वादि तटिदंतर्गतं समस्तं कृत्स्नं ज्योतिस्संभूय मिलित्वा । धीरश्रीराघवेन्द्रव्रतिवर। धीरः प्राज्ञः । ''धीरो मनीषी ज्ञः प्राज्ञः'' इत्यमरः । श्रीराघवेन्द्रव्रतिवर कांतियुक्त श्रीराघवेन्द्राख्ययतिश्रेष्ठ । ''देवाद्वृते वरः श्रेष्ठे' इत्यमरः ॥ ॥ त्वदमितहृदयाकाशनिर्यत्प्रकाशे ॥ हृदयगतआकाशः, अमितश्चासौ हृदयाकाशश्च अमितहृदयाकाशः, त्वत्संबंधी चासौ

अमितहृदयाकाशश्च त्वदमितहृदयाकाशः । आ समंतात् कासते प्रकाशते इति आकाशः । हृदयस्थः परमात्मा, त्वदमितहृदयाकाशः निर्गच्छंश्चासौ प्रकाशश्च निर्यत्प्रकाशः प्रतिभालक्षणे प्रकाशे (यः हर्षः) । अथवा हृदयगतः आकाशः हृदयाकाशः , आकाशशब्द-वाच्यपरमात्मा, तस्मात् निर्यत् निर्गच्छन् यः प्रकाशः प्रसादः परमात्मप्रतिभारूप इति यावत् । ( स चासौ प्रकाशश्च निर्यत्प्रकाश तस्मिन्प्रतिभारूप इति यावत्) । तस्मिन् प्रकाशे । खद्योतरीतिं खद्योतप्रकाशप्रकारं अत्यल्परूपं भजते सेवते।"भज् सेवायां " लट् ॥

संबंधातिशयोक्तिरलंकारः । हंत हर्षः । "हंत हर्षेऽ-नुकंपायामि" त्यमरः ॥१४॥

**चित्ते नायुक्तमर्थं कलयति सहसा नाभिधत्ते न सद्भिः**
**साकं मीमांसते वा न लिखति वचसोद्धाटयत्याशयं स्वम् ॥**
**उक्तं नो वक्ति भूयः क्वचिदपि लिखितं नैव निर्मार्ष्टितस्मा -**
**दस्माभिः सत्प्रबन्धप्रणयनविषये स्तूयते राघवेन्द्रः ॥१३॥**

**व.व्या.**:-अधुना ग्रंथप्रणयनसामर्थ्येऽपि राघवेन्द्रस्तवनमावश्यक मित्युपपादयति ॥ चित्त इति ॥ राघवेन्द्रः, चित्ते = मनसि, अयुक्तं अर्थं = प्रमेयं, न कलयति = न जानातीति, सहसा = अविचारेण, अयुक्तमर्थं, नाभिधत्ते = न वदति, सद्भिः साकं ,अयुक्तमर्थं, न मीमांसते = न विचारयति , अयुक्तमर्थं न लिखति, स्वं आशयं = स्वीयाभिप्रायं, नोद्धाटयति = न प्रकटयति । उक्तमर्थं , भूयः = पुनः, नो वक्ति, लिखितमर्थं क्वचिदपि , नैव निर्मार्ष्टि = मार्जितं न करोति, तस्मात् = ग्रंथप्रणयनचातुर्योपेतत्वात्, सत्प्रबन्धप्रणयन-

विषये= समीचीनग्रंथकरणविषये, अस्माभिः श्रीराघवेन्द्रः स्तूयते। कर्मणि लिट् ॥१३॥

**ज.व्या.**:- इदानीं प्रबंधप्रणयनविषयस्तवनं प्रतिजानीते ॥ चित्तेति॥ चित्ते चेतसि, अयुक्तं अयोग्यं युक्तिरहितं अनुपपन्नं वार्थं व्याख्याभिधेयं न कलयति । सहसा हठात्, तादृशमर्थं वचनेन नाभिधत्ते । "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु" इत्यमरः । सद्भिस्साकं सह, तादृशार्थं न मीमांसते वा, एवं किं न स्यादिति न विचारयतीत्यर्थः । "सन्सुधीः कोविदो बुधः", "साकं सत्रा समं सह" इति चामरः । तमर्थं क्वचिदपि कुत्रापि ग्रंथे स्वग्रंथेन लिखति लेखनं न करोति । वचसा स्वं आत्मीयं आशयं नोद्घाटयति न प्रकाशयतीत्यर्थः । "अभिप्रायश्छन्द आशयः" इत्यमरः । उक्तमर्थं भूयः नो वक्ति न वदति । क्वचिदपि स्वग्रंथे लिखितं नैव निर्मार्ष्टि मार्जनं न करोत्येव । तस्मात्तादृशगुणवत्वात् अस्माभिः प्रबंध-प्रणयनविषये ग्रंथकरणांशे राघवेन्द्रः स्तूयते, राघवेन्द्रस्य स्तवः क्रियते । "ष्टु स्तुता" विति धातोर्लट् । अत्रानुपमालङ्कारः ॥१५॥

**धीरश्रीराघवेन्द्रं कृतनिजविजयस्रग्धरार्थप्रकाशं**
**दृष्ट्वा संतुष्टचेताः दशमतिरचिरादभ्यषिंचत्पदे स्वे ॥**
**नूनं वाणी तदीयाननलिनगता तत्कृतस्वप्रियैक -**
**प्रत्यासंगप्रहृष्टा स्वयमपि तदनु स्वे पदे चाभ्यषिंचत् ॥१४॥**

**व.व्या.**:-॥ धीरेति ॥ दशमतिः = पूर्णप्रज्ञः, निजाश्च ते विजयाश्च ते, स्रक् = मालिका, तां धरतीति स्रग्धरा = स्रग्धरावृत्तोपेता, प्रमेयनवमालिकाभिधो ग्रंथः, तस्याः अर्थाश्च, तेषां प्रकाशः = बोधः

व्याख्यानमिति यावत्, कृतः निजविजयस्रग्धरार्थप्रकाशः येन सः तम् । धीरश्चासौ श्रीराघवेन्द्रश्च तं, दृष्ट्वा संतुष्टचेताः = संहृष्टमनाः सन्, स्वे पदे = श्रीमूलरामवेदव्यासार्चनादिरूपस्वकीयसाम्राज्यपदे, श्रीराघवेन्द्रं, अचिरात् = शीघ्रं, अभ्यषिंचत् = अभ्यषिक्तमकरोत् । तदनंतरं, तदीयाननलिनगता = श्रीराघवेन्द्रसंबन्धिमुखकमल-स्थिता, वाणी = सरस्वतीदेवी, तेन = श्रीराघवेन्द्रेण, कृतः स्वप्रियैकप्रत्यासंगः स्वस्याः प्रियः भर्ता तेन यः एकप्रत्यासंगस्तेन प्रहृष्टा सती, स्वयमपि, स्वे पदे = वाक्साम्राज्यपदेऽपि, अभ्यषिंचत् = अभिषिक्तवती बभूव । अणुमध्वविजयाख्यग्रंथमिति, भारतीदेव्याः तत्प्रतिपाद्यत्रिरूपवायुदेवाख्यभर्त्रा प्रतिपाद्यप्रतिपादकघटनया प्रीता भारतीदेवी स्वाभिमन्यमानवाक्रचनसाम्राज्येऽभ्यषिंचदिति भावः ॥१४॥

**ज.व्या.**:- अणुमध्वविजयव्याख्याकरणमाहात्म्यं उत्प्रेक्षते ॥ धीरेति॥ कृतनिजविजयस्रग्धरार्थप्रकाशं कृतः चरितः निजविजय-स्रग्धरार्थस्य स्वीयाणुमध्वविजयाख्यस्रग्धरावृत्तानुबद्धग्रंथार्थस्य प्रकाशः येन तं धीरश्रीराघवेन्द्रम् । श्रिया कांत्या युक्तो राघवेन्द्रः, धीरश्चासौ श्रीराघवेन्द्रश्च तम् । दशमतिः पूर्णागामिगोचरज्ञानः श्रीमध्वाचार्य इत्यर्थः । "दशेति पूर्णमुद्दिष्ट" इति वचनात् । दृष्ट्वा संतुष्टचेताः संतुष्टं चेतः मनो यस्य सः तथोक्तः सन् । अचिरादादरात् शीघ्रं स्वे पदे स्वकीये स्थाने आस्थानाधिपत्ये अभ्यषिंचत् अभिषेचनं कृतवान् । तदीयाननलिनगता राघवेन्द्र-संबंधिमुखपद्मस्थिता वाणी वाग्देवी सरस्वती । तत्कृतस्वप्रियैक-प्रत्यासंगप्रहृष्टा ,राघवेन्द्रयतिकृतस्वभर्तृमुख्यसंबंधप्रहृष्टा स्वयमपि तदनु पतिकृतस्वपदाभिषेकानंतरं, स्वे पदे स्वकीये सारस्वते पदे

च अभ्यषिंचत् अभिषेकं कृतवतीत्यर्थः । अभिपूर्वात् ''षिचु सेचने'' इतिधातोः लङ् । नूनं निश्चयः ॥

अत्र सिद्धविषये हेतूत्प्रेक्षालंकारः । उत्प्रेक्षालंकारव्यंजकं नूनमिति सद्भावाच्च । ''संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदा यत्र सिद्धासिद्धास्पदे परे'' इति । ''रक्तौ तवांघ्री मृदुलौ भुवि विक्षेपणात् ध्रुवम् '' इति सोदाहरणं तल्लक्षणाभिधानात् ॥१६॥

**ग्रंथो वादावली द्रागभजत विदितो दुर्मतारण्यदाहा -**
**दापूर्वार्धप्रतीपक्रमपरिपठितस्वाभिधागोचरत्वम् ॥**
**तस्य श्रीराघवेन्द्रव्रतिवर भवतो वायुवंशप्रसूते -**
**रेतर्ह्युद्दीपनं यत्तदुचितमिति मे मानसी वृत्तिरिंधे ॥१५॥**

**व.व्या.**:- वादावलीटीकाकर्तृत्वेन तान् गुरून् स्तौति ॥ ग्रंथ इति॥ विदितः= प्रसिद्धः,वादावली = तन्नामकग्रंथः, दुर्मतारण्यदाहात् = दुर्मतमेवारण्यं तस्य दाहो = भस्मीकरणं, तस्मात् निमित्तात्, द्राक्= शीघ्रं । आपूर्वार्धप्रतीपक्रमपरिपठितस्वाभिधागोचरत्वं = आपूर्वार्धं= वादावलीरिति संपूर्णनाममध्ये यत् पूर्वार्धं वादेति तत्पर्यंतं, प्रतीपक्रमः = विपरीतक्रमः, तेन परिपठिता स्वाभिधा, वादावली, दावावलीति स्वनामगोचरत्वं = तद्विषयत्वं, अभजत् = लब्धवान्, एतर्हि = एतत्पक्षं, श्रीराघवेन्द्रव्रतिवर, वायुवंशप्रसूतेः = वायोः = वाय्ववतारमध्वस्य वंशे = संततौ, प्रसूतिः = प्रसवः यस्य सः तस्य भवतः, तस्य = वादावलीग्रंथस्य, उद्दीपनं = व्याख्यानं यत् तत् उचितमिति, मे, मानसी = मनःसंबन्धिनी, वृत्तिः = प्रतिभा, इंधे=प्रवर्तते । अग्न्युद्दीपनं वायोर्युक्तमिति भावः ॥१५॥

**ज.व्या.**:- अथेदानीं वादावलीव्याख्याग्रंथकरणमहिमानं वर्णयति ।। ग्रंथ इति ।। विदितः प्रसिद्धः वादावली वादावल्याख्यग्रंथः प्रबन्ध इत्यर्थः । द्राक् द्रुतम् । ''द्राक् मंक्षु सपदि द्रुते'' इत्यमरः । दुर्मतारण्यदाहात् दुर्मतं दुष्टमायिमतं तदेवारण्यं वनं तस्य दाहाद्दहनात् करणात् निमित्तात् ।। आपूर्वार्धप्रतीपक्रमपरिपठितस्वाभिधा-गोचरत्वम् ।। आपूर्वार्धं वादावलीत्यत्र वादेति पूर्वार्धपर्यंतं प्रतीपक्रमेण व्युत्क्रमेण दावेति परिपठितायाः उच्चरितायाः, स्वाभिधायाः स्वनाम्नः , वादावलिरिति शब्दस्य, गोचरत्वं अरण्यवह्निपरशब्दवाचकत्वं , अभजत असेवत दावाग्निभावमगम-दिति यावत् । वादावलिः दावावलिरभूदित्यर्थः । हे राघवेन्द्रव्रतिवर श्रीराघवेन्द्राख्ययतिश्रेष्ठ , वायुवंशप्रसूतेः वायोः वाय्ववतार-श्रीमध्वाचार्यस्य, वंशे संततौ, आस्थानशिष्यपरंपरायामित्यर्थः । ''वंशो द्विधा विद्यया जन्मना चे'' त्युक्तेः । ''प्रसूतिः प्रभवो जननमि''ति यादवः। प्रसूतिः जननं यस्य तथोक्तः । तस्मात् भवतः सकाशात् तस्य वादावलेः एतर्हि संप्रतीत्यर्थः । ''एतर्हि संप्रतीदानीं'' इत्यमरः । उद्दीपनं अतिशयेन प्रकाशनं यत्, तदुचितं योग्यमिति, मे मम, मानसी मनःसंबंधिनी , वृत्तिः प्रवृत्तिः । इन्धे प्रकाशते । ''इंध् दीप्तौ'' इति धातोर्लट् । अनेन वादावल्या अपि दुर्मतनिरासकत्वं राघवेन्द्रगुरुकृतव्याख्यानकौशलादिति भावः ।।

अत्र राघवेन्द्रगुरोः प्रस्तुतवायुवंशमध्वकुलप्रसूतेः सकाशात् प्रकाशन-स्योचितत्वे वर्ण्यमाने अप्रस्तुतस्य दावाग्नेः वायूद्रेकप्रकाशनपरिस्फूर्तेः समासोक्तिरलंकारः । ''समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुंबति चंद्रमाः ।।'' इति सोदाहरणं तल्लक्षणात् ।।१७।।

**वंदारुप्राणिचेतःश्रिततिमिरपरीभावपांडित्य(कौशल्य)भाज -**
**स्तेजस्ते राघवेन्द्र व्रतिवर किमिति श्रीमतो वर्णयामः ॥**
**येनैषा चंद्रिकापि त्रिभुवनविशदा सत्पथोदंचितश्री -**
**र्लेभे सर्वज्ञमौलिप्रकटितविभवा त्वत्त एव प्रकाशम् ॥१६॥**

**व.व्या.**:- प्रकाशनामकचंद्रिकाव्याख्याकर्तृत्वेन स्तौति ॥ वंदारु-प्राणीति ॥ हे व्रतिवर व्रतीनां = संन्यासिनां वर = श्रेष्ठ, हे राघवेन्द्र, वंदारुप्राणिचेतःश्रिततिमिरपरीभावपांडित्यभाजः = वंदारवः = नमनशीलाश्च ते प्राणिनश्च, तेषां चेतांसि = मनांसि, तेषु श्रितानि = आश्रितानि, तिमिराणि = अज्ञानानि, तेषां परीभावे = तिरस्कारे, पांडित्यं = सामर्थ्यं, भाजः = सेवमानस्य, श्रीमतः = कांतिमतः, ते = तव, तेजः = सामर्थ्यं, किमिति वर्णयामः = किं कथयामः, त्रिभुवनविशदा = त्रयाणां भुवनानां समाहारः त्रिभुवनं, तस्मिन् विशदा = ख्याता, सत्पथोदंचितश्रीः = सतां पंथाः सत्पथः तस्मिन्= सन्मार्गे, उदंचिता = उक्ता, श्रीः = शोभा, यस्याः सा, सर्वज्ञमौलयः= सर्वज्ञश्रेष्ठाः विजयीन्द्रप्रभृतयः, तैः प्रकटितः, विभवा = महिमा यस्याः सा, एषा चंद्रिकासदृशचंद्रिकाग्रंथोऽपि, त्वत्त एव = त्वत्सकाशादेव, प्रकाशं येन = कारणेन, लेभे = लब्धवती, तेन = कारणेन, किं वर्णयाम इत्यन्वयः । चंद्रिकाया अपि प्रकाशो येनाभूत्तस्य तेजः किं वर्णनीयमिति भावः ॥१६॥

**ज.व्या.**:- चंद्रिकाप्रकाशरूपग्रंथकरणमाहात्म्यं वर्णयति ॥ वंदार्विति॥ हे राघवेन्द्रव्रतिवर, वंदारुप्राणिचेतःश्रिततिमिर-परीभावकौशल्यभाजः वंदारूणामभिवादकानां नमस्कारं कुर्वतामिति यावत् । वदि अभिवादनस्तुत्योरिति धातुः । प्राणिनां चेतनानां, चेतःश्रितानां चित्ताश्रितानां, तिमिराणामज्ञानांधकाराणां, परीभावे

तिरस्कारे निराकरण इति यावत् । कौशल्यं कुशलमेव कौशल्यं स्वार्थेऽण् ष्यञ् वा । तत् भजतीति भाक् तस्य । "वंदारुरभिवादके" ति कोशः, "प्राणी तु चेतनो जन्मी" ति, "चित्तं तु चेतो हृदयमि" ति चामरः, "श्रितः पङ्क्तं समाश्रित" इति वैजयंती । "परीभावस्तिरस्क्रिये" त्यमरः । श्रीमतो संपत्यादिमतः, ते तव, तेजः प्रभावम् । "तेजः प्रभावे दीप्तौ चे"त्यमरः । किमिति वर्णयामः कथं प्रतिपादयामः । येन कारणेन ज्ञानाख्यतेजोलक्षणकारणेन , त्रिभुवनविशदा ग्रंथपक्षे लोकत्रयप्रसिद्धा दोषरहितेति यावत् । प्रसिद्धचंद्रिकापक्षे लोकत्रयशुभ्रा धवलितेति यावत् । पुनः कथंभूता । सत्पथोदंचितश्रीः सतां सुधियां पंथाः सत्पथः । "ऋक्पूरब्धूपथामानक्षे" इति समासांतो अप्रत्ययः । तस्मिन्नुदंचिता उदिता श्रीः यस्याः सा तथोक्ता । सन्मार्गस्थसंपूजितप्रभावेति यावत् । अञ्च् गतिपूजनयोरिति धातुः । प्रसिद्धचंद्रिकापक्षे सत्पथे नक्षत्रमार्गे, उदंचिता उद्भूता श्रीः यस्याः सा तथोक्ता । सच्छब्दस्य नक्षत्रवाचकत्वेन कोशांतरेऽपि प्रतिपादितत्वात् । पुनः कथंभूता । सर्वज्ञमौलिप्रकटितविभवा सर्वज्ञानां विजयीन्द्रस्वामिप्रभृतीनां, मौलिना श्रेष्ठेन व्यासराजेन प्रकटितविभवा प्रकाशितः वैभवः माहात्म्यं यस्याः सा तथोक्ता । प्रसिद्धचंद्रिकापक्षे - सर्वज्ञस्य रुद्रस्य, मौलिना शिरसा, प्रकटितविभवा प्रकाशितधावल्यं यस्याः सा तथोक्ता । एषापि प्रसिद्धचंद्रिकापक्षे, तात्पर्यचन्द्रिकापि त्वत्त एव त्वत्सकाशादेव प्रकाशं लेभे प्राप्ता । "डुलभष् प्राप्ताविति धातोर्लट् ॥

अत्र प्रस्तुतप्रबंधप्रकाशे वर्ण्यमाने अप्रस्तुतचंद्रिकाप्रकाशनस्यापि परिस्फूर्तेः समासोक्तिर्वा अत्र श्लेषालंकारो वा । "नानार्थसंश्रयश्लेषः वर्ण्यावर्ण्योभयाश्रित" इति तल्लक्षणात् ॥१८॥

**धीरश्रीराघवेन्द्र त्वदतुलरसनारंगनृत्यत्स्वयंभू -**
**योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरः संगिरामः ॥**
**याभिः संमिश्रिताभिर्निरवधि वसुधाविश्रुता सा सुधाऽपि**
**क्षोणीगीर्वाणगम्यं परिमलममलं सांप्रतं संप्रपेदे ॥ १७ ॥**

**व.व्या.**:- परिमळनामकसुधाटिप्पणकर्तृत्वेन स्तौति ॥धीरेति ॥ हे धीरश्रीराघवेन्द्र , त्वदतुलरसनारङ्गनृत्यत्स्वयंभूयोषाधम्मिल्ल-भारश्लथकुसुमततीः= रसनैव= जिह्वैव रङ्गं =रंगस्थलं रसनारङ्गं, अतुलं = असदृशं च तत् रसनारङ्गं च अतुलरसनारङ्गं ,तव अतुलरसनारङ्गं = त्वदतुलरसनारङ्गं तस्मिन् , नृत्यंती च सा स्वयंभूयोषा च = स्वयंभुवः = ब्रह्मणः योषा = भार्या सरस्वती , तस्याः धम्मिल्लः = कचः, स एव भारः, तस्मात् श्लथाः = स्खलंत्यः, कुसुमानां ततयः = समूहाः, तास्तद्रूपाः त्वद्गिरः= तव वाक्यानि, सङ्गिरामः = संवर्णयामः । वचसां पुष्परूपत्वमुपपादयति उत्तरार्धेन। निरवधि = मर्यादारहितं यथा तथा, वसुधायां = भूम्यां, विश्रुता = प्रसिद्धा, सा सुधापि, संमिश्रिताभिः = मिलिताभिः, त्वद्गीर्भिः क्षोणीगीर्वाणगम्यं = भूसुरगम्यं, अतुलं परिमलं , सांप्रतं = अधुना, लेभे = प्राप्तवती । सुधायाः परिमलं, पदस्य वाक्यस्य पुष्पत्वं युक्तमिति भावः ॥१७॥

**ज.व्या.**:- इदानीं सुधापरिमलाख्यग्रंथकरणमाहात्म्यं स्तौति॥ धीरेति ॥ हे धीरश्रीराघवेन्द्र त्वदतुलरसनारंगनृत्यत्स्वयंभूयोषा-धम्मिल्लभारश्लथकुसुमततीः - त्वत् त्वदीया, अतुला असदृशी, रसना जिव्हा, सैव , रङ्गं नृत्तस्थानं, तस्मिन् नर्तनं कुर्वत्याः, स्वयंभुवः चतुर्मुखस्य, योषा स्त्री सरस्वती, तस्याः धम्मिल्लभारात् कचभारात्, श्लथानां गलितानां, कुसुमानां ततयः परंपरा, त्वद्गिरः

त्वद्वचनानि संगिरामः सम्यग्वदामः । सम् पूर्वात् गॄ निगरण इति धातोर्लट् । "रसज्ञा रसना जिव्हे" त्यमरः, "रङ्गं नाटचस्थानं", "स्वयंभूश्चतुराननः", "स्त्री योषिदबला योषा", "धम्मिल्लः संयताः कचाः", "प्रसूनं कुसुमं सुमं", "कबरी केशवेशोऽथ" इत्यमरः । संमिश्रिताभिः सम्यक् व्याख्यानव्याख्येयभावेन मिलिताभिः याभिः व्याख्यारूपवचोभिः वसुधाविश्रुता भूमौ ख्याता । "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता" इत्यमरः । सा प्रसिद्धा सुधापि सुधाख्यो ग्रंथः अमृतमपीत्यर्थः । "पीयूषममृतं सुधे" त्यमरः । क्षोणीगीर्वाणगम्यं - क्षोणीगीर्वाणैः भूदेवैः ब्राह्मणैरित्यर्थः । गम्यं ज्ञेयम् । गत्यर्थकानां ज्ञानार्थत्वात् । "क्षोणी ज्या काश्यपी क्षितिः" "गीर्वाणा दानवारयः" इति चामरः । प्राप्यं गम्यम् । "प्राप्यं गम्यं समासाद्यमि" त्यमरः । निरवधि अवधिरहितं मर्यादातिक्रांतमित्यर्थः । अतुलं असदृशं, परिमलं परिमलाख्यव्याख्यानं जनमनोहररूपगंधम् । "विमर्दोत्थे परिमलो गंधे जनमनोहरे" इत्यमरः । सांप्रतं अधुना, संप्रपेदे लेभे । संप्रेत्युपसर्गद्वयपूर्वात् "पद गताविति धातोर्लिट् । भवदीयव्याख्यानेन सुधाख्यग्रंथः लोके पठनपाठादिना परिमिलितः जनमनोहर इति भावः ॥

अत्र अप्रस्तुतप्रसिद्धसुधायाः परिमलप्राप्तिस्फूर्तेः समासोक्तिः , राघवेन्द्रव्याख्यानरूपवचसां कुसुमततीत्वेन रूपणात् रूपकसमासोक्त्योः संसृष्टिः ॥१९॥

**प्रायः प्रागन्यदीयातनुतरविवृतिग्रंथवासोविहीना**
**हीणा चा(ना)दर्शि धीरैरपि किल युवतिर्भाष्यटीकाभिधाना ॥**
**अद्य श्रीराघवेन्द्रव्रतिकृतविवृतिप्रौढकौशेयवासः (रत्नं)**
**स्वाभिप्रेतं(स्वेह्यायुक्तं) वसाना विहरति सुधियामग्रतः**
**स्वैरिणीव ॥१८॥**

**व.व्या.**:-तत्वप्रकाशिकाव्याख्यातृत्वेन स्तौति ॥ प्राय इति ॥ भाष्यटीकाभिधाना = सूत्रभाष्यस्य टीकेति अभिधानं यस्याः सा, युवतिः = स्त्री, प्राक् = राघवेन्द्रतीर्थीयव्याख्यानात्पूर्वं, अन्यदीयातनुतरविवृतिग्रंथवासो विहीना = अन्यदीयाः = अन्यसंबन्धिनः, अतनुतराः = महांतः, विवृतिग्रंथा एव वासांसि, तैर्विहीना = रहिता सती, ह्रीणा= लज्जां कुर्वती सती, धीरैः = पंडितैः, प्रायः = प्रायशः, आदर्शि = दृष्टवती बभूव । अद्य तु, स्वाभिप्रेतं = स्वाभिमतं, श्रीराघवेन्द्रव्रतिकृतविवृतिप्रौढकौशेयवासः = श्रीराघवेन्द्र इति व्रती = यतिः, तेन कृता, विवृतिः = व्याख्या च सैव , प्रौढं = श्रेष्ठं च तत्, कौशेयवासः = पीतांबरं च, वसाना = धृतवती सती, स्वैरिणीव = स्वच्छंदवृत्तिस्त्रीव, सुधियां = बुद्धिमतां, अग्रतः = पुरतः, विहरति = विहारं करोति । यथा मानिताः स्त्रियः सुवस्त्रालाभेन लज्जया संचरणासंभवेऽपि स्वाभिमतवस्त्रलाभे मानिनां पुरतः संचरणं कुर्वंति तथा तत्त्वप्रकाशिकायाः सम्यक् स्वाभिप्रायविवरणाभावे सुधियां बुद्ध्यनारोहे सति राघवेन्द्रकृतसम्यग्विवरणेन प्रकटार्थत्वं प्राप्तमिति भावः ॥१८॥

**ज.व्या.**:- अथेदानीं तत्वप्रकाशिकाव्याख्यानरचनमुत्प्रेक्षते॥ प्रायइति ॥ अन्यदीयातनुतरविवृतिग्रंथवासोविहीना, अन्येषां इमे अन्यदीयाः । संबंधार्थे छप्रत्ययः । अतिशयेन तनवः तनुतराः, ते न भवंतीति अतनुतराः बहव इत्यर्थः । विवृतिग्रंथ व्याख्यानग्रंथ-रूपप्रबंधाः, त एव वासांसि वस्त्राणि, तैः विहीना रहिता सती, अत एव ह्रीणा लज्जिता सती । "वस्त्रमाच्छादनं वासः" इति, "ह्रीणह्रीतौ तु लज्जित" इति चामरः । भाष्यटीकाभिधाना तत्वप्रकाशिके-त्यभिधानं नाम यस्याः सा तथोक्ता । युवतिः स्त्री तरुणीति यावत् ।

स्त्रीलिंगप्रयोगाद्युवतित्वेन निरूपणम् । प्राक् तत्वप्रकाशिका-व्याख्यारचनात्पूर्वं, प्रायः बहुतरैरपि । अव्ययानामनेकार्थत्वात् । धीरैरपि सुधादिग्रंथव्याख्यातृभिरपि विद्वद्भिरपीत्यर्थः । "धीरो मनीषी ज्ञः प्राज्ञः" इत्यमरः । नादर्शि किल नावलोकिता न पठितेत्यर्थः । अल्पतरव्याख्याभिः, बहुभावगर्भिततत्वप्रकाशिका स्फुटतरं, व्याख्यातृभिः धीरैरपि, न ज्ञायते इति भावः । दृशिर् प्रेक्षणे इति धातोः कर्मणि लुङ् । अद्य इदानीं , राघवेन्द्रव्रति-कृतविवृतिप्रौढकौशेयरत्नं =श्रीराघवेन्द्रव्रतिभिः कृता रचिता, विवृतिः व्याख्यैव, प्रौढं प्रवृद्धं, कौशेयरत्नं विवरणरूपं विस्तीर्णं श्रेष्ठं वस्त्रं, स्वेहायुक्तं स्वेच्छानुकूलं, स्वाभिप्रेतमितिपाठे स्वाभिप्रायविषयमित्यर्थः । वसाना आच्छादनवती सती, सुधियां सुष्ठुबुद्धिमतां ज्ञानिनां, अग्रतः पुरतः, स्वैरिणीव स्वच्छन्दचारिणीव, विहरति विहारं करोतीत्यर्थः । विपूर्वात् " हृञ् हरणे" इतिधातोः कर्तरि लट् । उपसर्गवशात् विहारार्थमिति ।

अत्र स्वैरिणीव विहरतीत्युक्त्या पूर्णोपमालंकारः । स तु "उपमानोपमेययोः यावद्धर्मसादृश्यवर्णनं पूर्णोपमेत्युच्यते" ॥२०॥

**ग्रंथोऽयं न्यायमुक्तावलिरिति भवता राघवेन्द्र प्रणीतो**
**नूनं मुक्तावलिर्यत्प्रथममुपचितादुद्धृतस्तंत्रसिंधोः ॥**
**प्रोतश्च ध्यानतंतौ तदनु तव गुणप्रौढिमाशंसतां नः**
**कंठेषु प्रेमभूम्ना बहुमतिविधये वाधुना संन्यधायि ॥ १९ ॥**

**व.व्या.**:-अधुना सूत्रोपन्यासरूपन्यायमुक्तावलिग्रंथकर्तृत्वेन स्तौति ॥ ग्रंथ इति ॥ हे राघवेन्द्र, भवता = त्वया, प्रणीतः = कृतः, न्यायमुक्तावलिरिति अयं ग्रंथः, मुक्तावलिः, नूनं = निश्चयेन , भवति ।

यत् अयं ग्रंथः, उपचितात् = अभिवृद्धात्, तंत्रसिंधोः = तन्त्रं सिद्धांतः स एव सिन्धु := समुद्रः तस्मात् , उद्धृतः, ध्यानतंतौ = ध्यानं = विचार एव तंतुः तस्मिन् , प्रोतश्च = संबद्धश्च, तदनु = तदनंतरं ,तव ,गुणप्रौढिं = गुणातिशयं , आशंसतां = कथयतां, नः = अस्माकं, कंठेषु, प्रेम्णः = स्नेहस्य , भूम्ना = अतिशयेन , बहुमतेः = बहुमानस्य, विधये वा करणाय वा, अधुना = इदानीं, भवता संन्यधायि = सम्यङ्न्यस्तमभूत् । अत अयं ग्रंथः मुक्तावलिः नूनं । मुक्तावलिः सिंधोरुद्धृता भवति तंतुप्रोता भवति कंठेषु स्थापिता भवति तत्सर्वमस्मिन् ग्रंथे अस्तीति न्यायमुक्तावलिरिति नाम युक्तमेवेति भावः ॥१९॥

**ज.व्या.**:-इदानीं न्यायमुक्तावलिग्रंथकरणमाहात्म्यं वर्णयति ॥ ग्रंथोऽयमिति ॥ हे राघवेन्द्र ,भवता त्वया, प्रणीतः रचितः उक्तः इति यावत् । न्यायमुक्तावलिः न्यायाः अधिकरणान्येव ? मौक्तिकानि तासां आवलिः माला न्यायमुक्तावल्याख्यग्रंथ इत्यर्थः। मुक्तावलिः(मणिः) प्रसिद्धमुक्ताहारः इति च नूनं निश्चयः । यत् यस्मात्कारणात् , उपचितादभिवृद्धात्, सिंधोः प्रसिद्धसमुद्रात् । (उत्धृतः), प्रसिद्धहारपक्षे सूत्रे प्रोतः । ग्रंथपक्षे तु तंत्रसिंधोः तंत्रं सिद्धांतः, तदेव सिंधुः सागरः, तस्मात् सिद्धांतसागरादित्यर्थः । प्रथमं उत्धृतः आनीतः, तंतौ प्रोतः ध्यानाख्यतंतौ प्रोतश्च । तदनु प्रोतानंतरं वा उपमायां विकल्पे वा । यथा दातुः प्रभोः, गुणप्रौढिं गुणमाहात्म्यं, आशंसतां स्तुवतां स्तोत्रं कुर्वतां , विद्वदादीनां , कंठेषु, अनेन प्रभुणा, बहुमतिविषये बहुमानकरणाय, मुक्ताहारः संन्यधायि सम्यङ्निहितः, तथा तव गुणप्रौढिं आशंसतां स्तुवतां, नो अस्माकं, कंठेषु प्रेमभूम्ना स्नेहबाहुल्येन, बहुमतिविधये बहुज्ञानप्राप्तये

कारणायाधुना इदानीं , त्वया ग्रंथाख्यमुक्तावलिः संन्यधायि सम्यङ्निहिता अभूत् । तस्मादयं ग्रंथः न्यायमुक्तावलिरिति निश्चितेति भावः ॥

अत्र न्यायमुक्तावल्याख्यग्रंथस्य मुक्तावलित्वेनोत्प्रेक्षणात् तत्साम्यपूर्वकोत्प्रेक्षाव्यंजकशब्दप्रयोगाच्चोत्प्रेक्षालंकारः । "संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मने" ति लक्षणकथनात् ॥२१॥

**हंतानंतोऽणुभाष्ये विलसति भगवत्पादसंवर्णितोऽर्थः**
**सत्यं प्रत्येतु लोकः कथमिदमधुना तस्य टीकां विना ते ॥**
**धीर श्रीराघवेन्द्र व्रतिवर निवसद्विश्वमास्यांतराले**
**स्तोके तोकस्य शौरेरथ भृशकुपितां तत्प्रसूमंतरेवा ॥२० ॥**

**व.व्या.**:-अधुना अणुभाष्यव्याख्याकर्तृत्वेन स्तौति ॥ हंतेति ॥ हे धीर = प्राज्ञ, श्रीराघवेन्द्र, भगवत्पादेन = आनन्दतीर्थमुनिना, संवर्णितः ,अनंतोऽर्थः, अणुभाष्ये तन्नामकग्रन्थे, विलसति = शोभते, अणुभाष्य इत्येतत्सत्यम् । तथापि अयं लोकः, ते = तव, टीकां = व्याख्यां, विना = अंतरा ,कथं प्रत्येतु = कथं जानीयादित्यर्थः । शौरेः = वासुदेवस्य, तोकस्य = बालस्य ,स्तोके = अल्पे, आस्यस्य= वदनस्य, अंतराले = मध्ये, निवसत् = विद्यमानं, विश्वं= समस्तं, भृशकुपितां = भृशं = अत्यन्तं कुपितां, तत्प्रसूं = तज्जननीं यशोदां, विना, लोकः कथं जानीयादित्यन्वयः । यशोदामुखेन यथा जनः कृष्णस्य वदने विश्वमास्त इति जानाति तथा त्वट्टीकया अणुभाष्यस्यानन्तार्थत्वं जानातीति भावः ॥२०॥

**ज.व्या.**:-इदानीं अणुभाष्यव्याख्याग्रन्थकरणमाहात्म्यं वर्णयति ॥ हंतानंतेति ॥ धीरश्रीराघवेन्द्रव्रतिवर, भगवत्पादसंवर्णितः

भगवत्पादैः स्वोचितैश्वर्यादिगुणसंपूर्णस्वरूपैः श्रीमदाचार्यैः । "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा" ॥, " उत्तमानां स्वरूपं तु पादशब्देन भण्यते" इति वचनात् । संवर्णितः सम्यग्वर्णितः भाषितः उक्त इति यावत् । अनंतः अपरिमितः अर्थः । अभिधेयः । "अर्थोऽभिधेयरैवस्त्वि" त्यमरः । अणुभाष्ये , विलसति वर्तत इत्यर्थः । हंत निश्चयः । तस्य अणुभाष्य इदमनंतार्थप्रकटनमस्तीत्येतदधुना संप्रति, लोकः जनः ।"लोकस्तु भुवने जन" इत्यमरः । सत्यं यथार्थं, ते तव,टीकां विना, कथं प्रत्येतु निश्चिनोतु । कथमिव शौरेः शूरकुलोत्पन्नस्य तोकस्य बालकृष्णस्य स्तोके । "स्तोकाल्पक्षुल्लकाश्लक्ष्णमि" त्यमरः । आस्यांतराले वदनांतराले निवसद्वासं कुर्वद्विश्वं चतुर्दश-भुवनं, अतिभृशकुपितां अत्यंतसंतप्तां, तत्प्रसूं तज्जननीं तस्य कृष्णस्य प्रसूर्जननी यशोदा तां अंतरेव विनैव, जनः, कृष्णस्यांतराले निवसच्चतुर्दशभुवनं कथं प्रत्येतु निश्चिनोतु तथा ? ।

अल्पेऽणुभाष्ये अनंतार्थप्रकटनं त्वद्व्याख्यां विना लोको न प्रत्येतीति सादृश्यस्य वर्णनात् उपमालङ्कारः ॥२२॥

**भिन्नैरर्थैरनेकप्रकरणभणितैरद्य मध्वागमाब्धौ**
**मत्या भूयो विचिंत्य श्रुतिपरिणतया शस्तया संग्रहीतैः ॥**
**सूत्रेष्वेकैकशोऽपि व्रतिवर भवता योजितेषु प्रवाचां**
**मोदो यादृङ्न तादृक् तव पुनरितरै राघवेन्द्र प्रबन्धैः ॥ २१ ॥**

**व.व्या.**:-तन्त्रदीपिकाकर्तृत्वेन स्तौति ॥ भिन्नैरिति ॥ मध्वागमाब्धौ = मध्वागमः = मध्वशास्त्रं, तदेवाब्धिः =

समुद्रस्तस्मिन्, अनेकानि च तानि प्रकरणानि च = भाष्यन्यायविवरणानुव्याख्यानादीनि तेषु भणितैः = उक्तैः, श्रुतिभिः= वेदैः, परिणतया = प्राप्तया, शस्तया = प्रशस्तया, मत्या= बुद्ध्या, भूयोऽपि = पुनः पुनः, विचिंत्य = विचार्य , संग्रहीतैः, भिन्नैरर्थै एकैकशः प्रत्येकमपि, हे व्रतिवर, भवता = त्वया, सूत्रेषु योजितेषु = संबद्धेषु सत्सु, प्रवाचां = प्रकृष्टं वाचः येषां ते तेषां, आर्याणां, यादृक्, मोदः = संतोषः , बभूव ,हे राघवेन्द्र , तव इतरैः प्रबन्धैः = ग्रंथैः, तादृक् मोदो न बभूव ॥ २१॥

**ज.व्या.**:-इदानीं तंत्रदीपिकाख्यग्रंथकरणमाहात्म्यं वर्णयति ॥ भिन्नैरिति ॥ मध्वागमाब्धौ श्रीमदाचार्यमतसिद्धांतसमुद्रे, श्रुतिपरिणतया श्रुत्या वेदेन श्रवणादिना वा, परिणतया पक्वया । "पक्वं परिणते" इत्यमरः । शस्तया प्रशस्तया परिशुद्धयेत्यर्थः । मत्या मननेन बुध्या वा, भूयः विचिंत्य विचार्य, संग्रहीतैः ज्ञानविषयैरित्यर्थः । क्रोडीकृतैः, अनेकप्रकरणभणितैः अनेकेषु बहुषु प्रकरणेषु, भणितैः कथितैः, भिन्नैः एकप्रकाररहितैः, अर्थैः अभिधेयैः, सूत्रेषु ब्रह्मसूत्रेषु ,एकैकशः, हे व्रतिवर, भवता, योजितेषु संबंधितेषु एकवाक्यतया प्रतिपादितेषु सत्सु, प्रवाचां प्रवचनशीलानां विदुषां, यादृक् यादृशः, मोदो हर्षोऽभूत् , हे राघवेन्द्र , तव , इतरैः तंत्रदीपिकाग्रंथापेक्षया भिन्नप्रबन्धैः ग्रंथैः , न तादृक् मोदः । अत्राप्यनुवर्तते हर्षः । पुनः भूयः, अद्य इदानीं, उत्तरत्र भविष्यच्च नाभूदित्यर्थः । अभूदिति क्रियाध्याहारः ॥

**टि** :- (ग्रंथान्तरैरप्राप्तः मोदः तन्त्रदीपिकया प्राप्त इति परिसंख्यालङ्कारः । " परिसंख्या भवेदेकं निषिध्यान्यत्र यंत्रणम् । स्वांते रागो न किं तर्हि शाटीषु विजयीन्द्र ते ॥ -( अलंकार मञ्जरी) इति सोदाहरणं तल्लक्षणात् । ) ॥ २३ ॥

**धीर श्रीराघवेन्द्र व्रतिवर सुजनानुग्रहव्यग्रचित्तै -**
**राचार्यैः संग्रहीताः कतिचन मनवः सारभूताः श्रुतिभ्यः ॥**
**तानेवोद्धृत्य भूयः श्रुतिषु निदधता शिष्यवर्गोपकृत्यै(क्लृप्त्यै)**
**लोके साधु व्यधायि श्रुतगुण भवताऽऽचार्यचर्यानुवृत्तिः ॥२२॥**

**व.व्या.**:-तत्प्रसक्तमन्त्रोद्धारणकर्तृत्वेन स्तौति ॥ धीरेति ॥ हे धीर श्रीराघवेन्द्रव्रतिवर, सुजनानुग्रहव्यग्रचित्तैः = सज्जनेषु अनुग्रहेण व्यग्रं = व्याकुलं, चित्तं = अंतःकरणं येषां ते तैः, आचार्यैः = श्रीमदाचार्यैः , सारभूताः = श्रेष्ठाः, कतिचन मनवः, श्रुतिभ्यः संग्रहीताः = उद्धृताः, शिष्यवर्गोपकृत्यै = शिष्यसमूहोपकाराय, तानेव = आचार्यसंग्रहीतमंत्रानेव , भूयः उद्धृत्य = संगृह्य, श्रुतिषु = श्रोत्रियेन्द्रियेषु, निदधता = स्थापयित्रा, भवता = त्वया, श्रुतगुण = श्रुताः गुणाः यस्य सः तस्य संबुद्धिः, आचार्यचर्यानुवृत्तिः = आचार्याणां = श्रीमदाचार्याणां चर्यस्य = चरित्रस्य अनुवृत्तिः = अनुसरणं, लोके ,साधु यथा भवेत्तथा, व्यधायि अकृतेत्यर्थः ॥२२॥

**ज.व्या.**:- मन्त्रोद्धारकरणसामर्थ्यं वर्णयति ॥ धीरश्रीरिति ॥ सुजनानुग्रहव्यग्रचित्तैः, सुजनेषु सज्जनेषु , अनुग्रहे व्यग्रं आसक्तं , चित्तं मनो येषां ते तथोक्ताः तैः । "व्यग्रो व्यासक्त आकुल" इत्यमरः। आचार्यैः श्रीमदाचार्यैः, श्रुतिभ्यः वेदेभ्यः, सारभूताः उत्कृष्टाः, कतिचन मनवः केचन मंत्राः, संग्रहीताः मनसा क्रोडीकृताः तन्त्रसारसंग्रह उक्ताः । "मनुर्मंत्रमि" तिरत्नमाला, "सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः । तानेव आचार्यैः श्रुतिभ्यः संग्रहीतान्मन्त्रानेव, उद्धृत्य उद्धारं कृत्वा, शिष्यवर्गोपक्लृप्त्यै छात्रसमूहोपकाराय, भूयः पुनरपि, हे श्रुतगुण प्रसिद्धमहिमन्, धीरश्रीराघवेन्द्रव्रतिवर, लोके भुवने श्रुतिषु शिष्यकर्णेषु,

निदधता निक्षिप्तवता उपदेशं कुर्वतेत्यर्थः । भवता, आचार्य-चर्यानुवृत्तिः आचार्यस्य श्रीमदाचार्यस्य चर्यस्य चरितस्य, अनुवृत्तिरनुसरणं, साधु समीचीनतया, व्यधायि अकारीति व्यग्रोक्तिः । विपूर्वात् धाञ् धातोर्लुङ् ॥

इहाचार्यैः श्रुतिभ्यः संग्रहीतानां मंत्राणां पुनः (शिष्य) श्रुतिषु निधानेन विरुद्धाचरणमेव कृतमिव भासते इति विरोधाभासालङ्कारः। "आभासत्वे विरोधस्य विरोधाभास इष्यते" ॥२४॥

**गीतामत्यर्थधूतश्रितजनदुरितामिन्दुवंशप्रसूतौ**
**व्याचक्षाणे मुरद्विष्यभिजनमभजद्भद्रमिन्दोरनिद्रम् ॥**
**धीर श्रीराघवेन्द्र त्वयि पुनरनघे हंसवंशोदिते तां**
**व्याकुर्वत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायं(यः) ॥२३॥**

**व.व्या.**:-गीतार्थसंग्रहकर्तृत्वेन स्तौति ॥ गीतामिति ॥ इंदुवंशप्रसूतौ = इंदोः = चंद्रस्य वंशे प्रसूतिः = जनिः यस्य सः तस्मिन्, मुरद्विषि = श्रीकृष्णे, अत्यर्थधूतश्रितजनदुरितां अत्यर्थं = अत्यंतं धूतं = निराकृतं, श्रितजनानां = आश्रितलोकानां, दुरितं = दुष्कर्म यया सा तां, गीतां = भगवद्गीतां ,व्याचक्षाणे= व्याकुर्वति सति, इंदोः, अभिजनं = वंशं, अनिद्रं भद्रं =शुभं , अभजत् = प्राप । तस्मात् हे धीर श्रीराघवेन्द्र, हंसवंशोदिते = हंसानां = सन्यासिनां वंशे उदिते = जाते, अनघे = न विद्यते अघं = पापं यस्य सः तस्मिन् त्वयि, पुनः अद्य, तां = गीतां, व्याकुर्वति सति, भव्यं= भद्रं, मित्रान्ववायं मित्राणां= बंधूनां अन्ववायं = वंशं , आशु कथमिव न भजेत् , भजेदेव। चंद्रवंशप्रसूतस्य कृष्णस्य गीतोपदेशेन चंद्रवंशस्य शुभप्राप्तिर्यथा

तथा हंसकुलप्रसूतस्य तव गीताव्याख्यानेन त्वदीयजनानां शुभप्राप्तिरवर्जनीयेति भावः ॥२३॥

**ज.व्या.**:-इदानीं गीतार्थसंग्रहाख्यग्रंथकरणमहिमानं वर्णयति ॥ गीतामिति ॥ अत्यर्थधूतश्रितजनदुरितां अत्यर्थमतिवेलं अत्यंतमित्यर्थः, धूतानि निराकृतानि, श्रितजनानां पठनपाठनादिना तदेकनिष्ठानां जनानां, दुरितानि दुष्कृतानि, यया सा तथोक्ताम् । "अतिवेलभृशात्यर्थमि" ति, "समुज्झितं धूतमुत्सृष्टमि" ति, "अंहो दुरितदुष्कृतमि" ति चामरः । इंदुवंशप्रसूतौ इन्दोः चन्द्रस्य वंशस्संतानं तस्मिन्, प्रसूतिः प्रसवः जननमितियावत्, यस्मिन् तस्मिन्नित्यर्थः । मुरद्विषि मुरनामकराक्षसद्वेषिणि श्रीकृष्णे, व्याचक्षाणे सति विशेषाकारेण वदति सति, इन्दोश्चन्द्रस्य अभिजनं अन्वयं कुलमित्यर्थः,कर्ता । अनिद्रं जागरूकं, भद्रं मंगलं, कर्म, अभजत् असेवत । भज् सेवायामिति धातोर्लङ् । "प्रसूतिः प्रसव" इति, "संततिर्गोत्रजननकुलान्यभिजनान्वयावि" ति चामरः । धीरश्रीराघवेन्द्र, अनघे भ्रममदादिदोषरहिते । हंसवंशोदिते हंसस्य यतेः वंशेऽन्वये उदिते उत्पन्ने, त्वयि, तां गीतां व्याकुर्वति सति, मित्रान्ववायः सुहृदामन्ववायः वंशः, अद्य इदानीं, भव्यं क्षेमं, कथमिव आशु न भजेत् कथं न सेवेत इत्यर्थः । "हंसः सूर्ये यतौ विष्णौ खगे निर्लोभभूभुजि" इति नानार्थरत्नमाला । "अथ मित्रं सखा सुहृत्" इत्यमरः, "वंशोऽन्ववायः संतान" इति च ॥

अत्र समासोक्तिरलंकारः । समासेन संक्षेपेण प्रस्तुताप्रस्तुतयोर्यतिसूर्ययोः हंसशब्देनाभिधानात्, मित्रशब्देन सुहृत्सूर्ययोश्च परिस्फूर्तेः । "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य

चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुंबति चंद्रमा ॥ '' इति लक्षणमुदाहरणं च ॥२५॥

**न स्यादीशप्रसादो गुरुवर(पद)करुणामंतरेणेतिरूढो**
**धीर श्रीराघवेन्द्र व्रतिवर सुदृढश्चेतसस्ते विपाकः ॥**
**येन व्याख्याय गीतामपि गुरुचरणोदारतद्भाष्यटीका -**
**व्याख्या विख्यातविद्वन्मणिगणविनुताकारि भूयस्त्वयैव ॥२४॥**

**व.व्या.**:-प्रमेयदीपिकाव्याख्याकर्तृत्वेन स्तौति ॥ न स्यादिति ॥ हे धीर, हे व्रतिवर, हे राघवेन्द्र , गुरुवरकरुणां अंतरेण = विना, ईशप्रसादः न स्यादिति, रूढः = अवगाही, ते = तव , चेतसः = मनसः, विपाकः = परिपक्वावस्था, सुदृढः = अतिनिश्चितः, येन = कारणेन, गीतां व्याख्यायापि, भूयः = पुनः, त्वयैव, विख्याताः विद्वन्मणयः = पंडितश्रेष्ठाः, तेषां गणः, तेन विनुता = स्तुता । गुरुचरणोदारतद्भाष्यटीकाव्याख्या = गुरुचरणस्य = जयमुनेः, उदारा च सा तद्भाष्यस्य टीका = प्रमेयदीपिका, तस्याः व्याख्या = व्याख्यानं, अकारि = कृता । लुङ् । भारतार्थसंग्रहकरणेन गीताकर्तृप्रसादः संपादितः । पुनः भाष्यटीकाव्याख्याकरण-मयुक्तमिति न वाच्यम् । गुरुप्रसादं विना ईशप्रसादो न भवतीत्यतः गुरुवरजयार्यप्रसादः प्रमेयदीपिकाव्याख्याकरणेन संपादित इति भावः ॥२४॥

**ज.व्या.**:-अथेदानीं प्रमेयदीपिकाव्याख्याकरणमहिमानं तावदाह ॥ न स्यादिति ॥ गुरुपदकरुणामंतरेण गुरुचरणकृपां विना, ईशप्रसादः परमात्मप्रसन्नता अनुग्रह इत्यर्थः । न स्यान्न भवेत् , इत्येवंप्रकारेण, हे धीरश्रीराघवेन्द्रव्रतिवर, ते चेतसः अंतःकरणस्य,

रूढः निरूढः, निश्चित इत्यर्थः । विपाकः परिपाकः, स्वयमेव सुदृढः चित्तारूढः, अत्यंतं सुष्ठु हृदि निश्चितः उत्पन्न इति यावत् । येन येन कारणेन, गुरुप्रसादमंतरेण, हरिप्रसादो न भवतीति निश्चयेन, गीतां भगवद्गीतां, व्याख्यायापि, त्वयैव, विख्यातविद्वन्मणिगण-विनुता विख्याताः प्रसिद्धाः विद्वन्मणयः विद्वच्छ्रेष्ठाः, तैः विनुता विशेषेण स्तुता, गुरुचरणोदारतद्भाष्यटीकाव्याख्या गुरुचरणानां श्रीमज्जयार्याणां उदारा महती तद्भाष्यटीका प्रमेयदीपिकाख्या तस्याः व्याख्या पुनरप्यकारि कृतेत्यर्थः । डुकृञ् करण इति-धातोर्लुङ् ॥२६॥

**नानातन्त्रप्रसिद्ध(प्रसङ्ग)त्रिभुवनविदितोदारसारस्वतोऽपि**
**प्रत्नानेकप्रबन्धप्रवचनरचनावित्ततत्कौशलोऽपि ॥**
**शश्वद्व्याख्यातगीताकृतिरपि विबुधानुग्रहैकाग्रचित्तो**
**गीतातात्पर्यटीकाविवरणमकरोदद्भुतं राघवेन्द्रः ॥ २५॥**

**व.व्या.**:- न्यायदीपिकाव्याख्याकर्तृत्वेन स्तौति ॥ नानेति ॥ नानातन्त्रप्रसिद्धत्रिभुवनविदितोदारसारस्वतोऽपि = नानाविधानि, तन्त्राणि = सिद्धांतास्तेषु प्रसिद्धानि, त्रिभुवनविदितानि = त्रयाणां भुवनानां समाहारस्त्रिभुवनं तेन विदितानि = ज्ञातानि, उदाराणि = उत्कृष्टानि, सारस्वतानि = वाक्यानि यस्य सस्तादृशोऽपि । प्रत्नानेकप्रबन्धप्रवचनरचनावित्ततत्कौशलोऽपि = प्रत्नाः = पुराणाः, अनेकाः = बहवश्च ते प्रबन्धाः = ग्रंथाश्च तेषां प्रवचनं = व्याख्यानं, रचनं = नामकरणं च, ताभ्यां वित्तं = बुधैर्विज्ञातं, तत्कौशलं = तयोः प्रवचनरचनयोः कौशलं = चातुर्यं यस्य सस्तादृशोऽपि, शश्वद्-व्याख्यातगीताकृतिरपि = शश्वत् = स्थिरं यथा तथा व्याख्याता

गीताकृतिः = गीताग्रंथः येन सस्तादृशोऽपि, विबुधेषु = विद्वत्सु, अनुग्रहस्तस्मिन्नेव, एकाग्रं = मुख्यासक्तं, चित्तं = चेतः यस्य सः, राघवेन्द्रः, अद्भुतं, गीतातात्पर्यटीकायाः = न्यायदीपिकायाः, विवरणं = व्याख्यानं, कृतवान् ॥ २५॥

**ज.व्या.**:- इदानीं गीतातात्पर्यविवरणमकर्तव्यमित्याशंक्य तत्कर्तव्यतासमर्थनमुखेन तत्करणमहिमानं वर्णयति ॥ नानेति ॥ नानातन्त्राणामनेकशास्त्रसिद्धांतानां प्रसंगेन उपन्यासरूपवादेन, त्रिभुवनैः त्रिभुवनस्थजनैः । मंचाः क्रोशन्तीत्यादिवत् जहत्स्वार्थ-लक्षणा । विदितमवगतं, उदारमुत्कृष्टं, सारस्वतं सरस्वतीसंबंधि-वैदुष्यादिकं यस्य सः तथोक्तः । अनेन वैदुष्यप्रकटनार्थं न व्याख्या कृतेति सूचितम् । प्रत्नानेकप्रबन्धप्रवचनरचनावित्ततत्कौशलोऽपि प्रत्नानां प्राचीनानां, अनेकेषां बहूनां, प्रबन्धानां ग्रंथानां, प्रवचनस्य व्याख्यानस्य, रचनया करणेन, वित्तं विज्ञातम् । "वित्तं विज्ञातमि" त्यमरः । तत्कौशलं व्याख्यानकरणसामर्थ्यं यस्य सः तथोक्तः । अनेन स्वस्य व्याख्याकरणसामर्थ्यप्रकटनाय न व्याख्याकरणमिति सूचितम् । शश्वत् बहुवारं, व्याख्यातगीताकृतिरपि व्याख्याता गीताकृतिः गीताप्रबन्धः येन सः तथोक्तोऽपि । अनेन गीताया अव्याख्यातत्वात् तद्व्याख्याकरणमित्यपि समाहितम् । विबुधानुग्रहैकाग्रचित्तः विबुधेषु विद्वत्सु, अनुग्रहे दयाकरणे, एकाग्र-मेकायनं चित्तं चेतो यस्य सः । "एकाग्रैकायनावपि" इत्यमरः । एतादृशश्रीराघवेन्द्रः, अद्भुतमाश्चर्यकरं गीतातात्पर्यटीकाविवरणं, अकरोत् कृतवान् । "डुकृञ् करण" इति धातोर्लङ् । (नाना-तंत्रेत्यादिविशेषणैर्न स्वसामर्थ्यादिप्रकटनाय व्याख्याकरणं किंतु विबुधानुग्रहायैवेति लभ्यते ) अत्र परिकरालंकारः ॥२७॥

**लक्ष्मीनारायणार्यस्तव तनयमणिः सत्सु सर्वेषु धन्यो**
**यस्मादृग्भाष्यटीकातनुतरविवृतेरंजसा तत्कृतायाः ॥**
**प्रेम्णा विद्वत्सु भूयः प्रचयमभिलषन् राघवेन्द्रव्रतीन्द्र**
**प्रावोचस्त्वं प्रतीतव्रत निचयमृचामेव भाष्यानुरोधात् ॥ २६॥**

**व.व्या.**:- ऋगर्थमञ्जरीकर्तृत्वेन स्तौति ॥ लक्ष्मीति ॥ प्रतीतं = प्रसिद्धं व्रतं यस्य सः तस्य संबुद्धिः, हे राघवेन्द्र, तव तनयमणिः = पुत्रश्रेष्ठः लक्ष्मीनारायणार्यः, सर्वेषु सत्सु = सर्वसज्जनमध्ये, धन्यः= श्रेष्ठः ,यस्मात् कारणात् , अञ्जसा = सम्यक्, तेन = लक्ष्मीनारायणार्येण, कृतायाः, ऋग्भाष्यटीकायाः, या अतनुतरा = महती, विवृतिः = व्याख्या, तस्याः विद्वत्सु = पंडितेषु , भूयः = अत्यंतं, प्रचयं = प्रसिद्धिं , अभिलषन् = अपेक्षमाणः त्वं , प्रेम्णा= लक्ष्मीनारायणार्ये स्नेहेन, ऋग्भाष्यानुरोधात् = अनुसरात् ,ऋचां निचयमेव = समूहमेव , प्रावोचः = व्याख्यातवानसि ॥ २६ ॥

**ज.व्या.**:-ऋगर्थमंजर्याख्यग्रंथकरणमहिमानं वर्णयति ॥ लक्ष्मीनारायणार्य इति ॥ प्रतीतव्रतनिचय प्रतीतं प्रसिद्धं, व्रतं समस्तमध्वतंत्रं व्याकरिष्यामीति संकल्पो यस्य सः तथोक्तः तस्य संबुद्धिः, हेतुगर्भमिदं विशेषणम् । हे राघवेन्द्रव्रतीन्द्र, तव तनयमणिः आत्मजश्रेष्ठः । ''आत्मजस्तनयस्सूनुरि'' त्यमरः । लक्ष्मीनारायणार्यः तन्नामकाचार्यः, सर्वेषु समस्तेषु, सत्सु सुधीषु, धन्यः कृतकृत्यः कृतं कृत्यं येन सः तथोक्तः । यस्मात्कारणात् तत्कृतायाः लक्ष्मीनारायणाचार्यकृतायाः, ऋग्भाष्यटीकातनुतर-विवृतेः ऋग्भाष्यटीकायाः, तनुतरा अतिस्वल्पा, विवृतिः विवरणं तस्याः, विद्वत्सु विपश्चित्सु , प्रेम्णा दयया, अंजसा शीघ्रं, भूयः बहुशः, प्रचयं प्रसरणं विस्तृतिं , अभिलषन् वाञ्छन्, त्वम् ।

''लसत्कांतौ कांतिरिच्छे'' ति व्याख्यानात् । भाष्यानुरोधात् ऋग्भाष्यानुसारेण ऋचां निचयमेव समूहमेव , अंजसा सम्यक् , प्रावोचः प्रवचनमकार्षीः ॥ अत्रापि परिकरालङ्कारः ॥२८॥

**ह्द्यत्रय्यंतविद्यामुखनिखिलकलातत्वबोधैकमूर्ते**
**धीरश्रीराघवेन्द्र व्रतिवर सकलान्येव सूक्तानि सम्यक् ॥**
**व्याकुर्वन्तं भवंतं व्यवसितमतयो हंत निध्यासयंतः**
**सर्वे भूयः स्मरंति व्रतिसुमतिमणेर्ब्रह्मसूत्रप्रणेतुः ॥२७॥**

**व.व्या.**:- अधुना पुरुषसूक्तव्याख्याकर्तृत्वेन स्तौति ॥ हृद्येति ॥ हृद्यत्रय्यंतविद्यामुखनिखिलकलातत्वबोधैकमूर्ते= हृद्याः = मनोहराः त्रय्यंतविद्याः = उपनिषद्विद्याः, मुखानि = प्रधानाः यासां ताः, ताश्च ताः निखिलाश्च ताः कलाः = विद्याश्च, तासां तत्वबोधः = तत्वज्ञानमेव, एकं = केवलं, मूर्तिः = शरीरं यस्य सः तस्य संबुद्धिः, हे धीर व्रतिवर श्रीराघवेन्द्र, सकलान्येव सूक्तानि सम्यक् व्याकुर्वंतं भवन्तं, निध्यासयंतः = ध्यानं कुर्वतः, व्यवसितमतयः = निश्चितबुद्धयः, सर्वे पंडिताः, व्रतिसुमतिमणेः = ऋषिसंघश्रेष्ठस्य, ब्रह्मसूत्रप्रणेतुः = व्यासस्य । कर्मणि षष्ठी । स्मरंति ॥२७॥

**ज.व्या.**:- इदानीं पुरुषसूक्तादिपंचसूक्तव्याख्याकर्तृत्वेन स्तौति ॥ हृद्येति ॥ हृद्याः हृदयंगमाः । ''हृद्यं दयितं वल्लभं प्रियमि'' त्यमरः। मनोज्ञा इति यावत् । त्रय्यंतविद्याः उपनिषद्विद्याः, ता एव मुखानि प्रधानानि यासां ताः, ताश्च ताः निखिलकलाश्च समस्तविद्याः समस्तशास्त्राणि, तेषां तत्वबोध एव तत्वज्ञानमेव, एका केवला मुख्या । ''एके मुख्यान्यकेवले'' त्यमरः । मूर्तिश्शरीरं यस्य सः तथोक्तः तस्य संबुद्धिः बोधैकमूर्ते । धीरश्रीराघवेन्द्रव्रतिवर,

सकलान्येव समस्तान्येव सूक्तानि पुरुषसूक्तादि पंचसूक्तानि, सम्यक् समीचीनतया, व्याकुर्वन्तं भवंतं, व्यवसितमतयः व्यवसिता निश्चिता मतिर्बुद्धिर्येषां ते तथोक्ताः । सर्वे संतः समस्तविद्वांसः । "सन्सुधीः कोविदो बुधः " इत्यमरः । निध्यासयंतः नितरां ध्या(त्वा)तवंतः । व्रतिसमितिमणेः ऋषिसभानायकस्य । "सभासमितिसंसद" इत्यमरः । ब्रह्मसूत्रप्रणेतुः ब्रह्मसूत्रकर्तुः ब्रह्मसूत्रकर्तारं वेदव्यासमित्यर्थः, भूयः बहुशः, स्मरंति (स्मरणं) कुर्वंति । प्रणेतुरिति कर्मणि षष्ठी । श्रीवेदव्यास एव पुरुषसूक्तादि पंचसूक्तान्युद्धृत्य तदर्थनिर्णयाय ब्रह्मसूत्राणि कृतवान् । तत्पुरुषसूक्तादिव्याख्यातॄन् भवतः दृष्ट्वा सूत्रकारं स्मरंतीत्यर्थः । "हंत हर्षेऽनुकंपायामि" त्यमरः ॥

अत्र स्मृतिमदालंकारः । "स्यात्स्मृतिभ्रांतिसंदेहैस्त-देवालंकृतित्रयम् । पङ्कजं पश्यतः कांतामुखं मे गाहते मन ॥" इति सोदाहरणलक्षणात् ॥ २९ ॥

**यावद्वेदांतखंडप्रवचनकृतिनि प्रेमभूमा न तादृक्**
**सर्वाम्नायप्रवक्तर्यनुपमचरिते राघवेन्द्रव्रतीन्द्रे ॥**
**इत्येतद्देहभाजामतिविशदरुचौ जागरूकेऽपि लोके**
**राकाचंद्रे द्वितीयाशशिशकलनतिन्यायमेवानुरुंधे ॥२८॥**

**व.व्या.**:-खंडार्थप्रवक्तृत्वेन स्तौति ॥ यावदिति ॥ वेदांतखंड-प्रवचनकृतिनि = उपनिषत्खंडार्थप्रवचनकर्तरि, राघवेन्द्रव्रतीन्द्रे , विदुषां , यावत्प्रेमभूमा = प्रेमातिशयः , तादृक् प्रेमभूमा, सर्वाम्नायप्रवक्तरि = सर्ववेदार्थव्याख्यातरि, अनुपमं = असदृशं, चरितं यस्य सस्तस्मिन् राघवेन्द्रव्रतीन्द्रे , नाभूत्,

इत्येतत्खंडार्थप्रवक्तरि प्रेमकरणं, अति = अत्यंतं विशदा रुचिः = कांतिर्यस्य सस्तस्मिन् , राकाचंद्रे = पौर्णिमाचंद्रे जागरूकेऽपि = सिद्धेऽपि, लोके, देहभाजां = मनुष्याणां , द्वितीयायाः शशी तस्य शकलः = खंडः तस्य नतिः = नमनं तस्य न्यायमेव अनुरुंधे = अनुसरति । पूर्णचंद्रं परित्यज्य द्वितीयाचंद्रनमनमिव खंडार्थवक्तरि त्वयि प्रेमकरणं युक्तमिति भावः ॥ २८ ॥

**ज.व्या.**:-इदानीं उपनिषत्खंडार्थवर्णनमहिमानमाह ॥ यावदिति ॥ वेदांतखंडप्रवचनकृतिनि वेदांतानामुपनिषदां, खंडानां प्रसिद्धशाखा-विशेषाणां, प्रवचनकृतिनि प्रवचनकर्तरि । राघवेन्द्रव्रतीन्द्रे, यादृक् यादृशः, प्रेमभूमा प्रेमातिशयः, अभूत् , सर्वाम्नायप्रवक्तरि सर्वविदव्याख्यातरि, अनुपमचरिते असदृशचरिते, त्वयि , तादृक् तादृशः, प्रेमातिशयः नाभूदित्येतत् प्रेमाकरणं देहभाजां प्राणिनां, अतिविशदरुचौ अत्यंतनिर्मलकांतौ, राकाचन्द्रे पूर्णिमाचन्द्रे, लोके भुवने, जागरूकेऽपि प्रकाशमाने सति, द्वितीयाशशिशकलनति-न्यायमेव शुक्लपक्षद्वितीयाचन्द्रखंडनमनमिव,अनुरुंधे अनुसरति । पूर्णचन्द्रं परित्यज्य द्वितीयाचन्द्रखंडनमनमिव खंडार्थप्रवक्तरि त्वयि प्रेमकरणमिति भावः ॥

अत्र लोकोक्तिरलङ्कारः । ''लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते'' ॥३०॥

**हृद्या टीकानवद्या परविवृतयजुःसामसंबन्धिनी ते**
**मालिन्यक्षालनांभः स्वयमजनि हरेरुत्तरांगे च मूर्ध्नि ॥**
**सैवर्चां राघवेन्द्र व्रतिसुमतिमणेऽनन्यसंपर्कभाजा-**
**मोजिष्टे दक्षिणाङ्गे मृगमदमिलितोदारपाटीरसारः ॥२९॥**

**व.व्या.**:-ऋग्यजुःसामव्याख्याकर्तृत्वेन स्तौति ॥ हृद्येति ॥ परविवृतयजुःसामसंबन्धिनी = परेण विवृते यजुःसामे च तयोः संबन्धिनी, अनवद्या, हृद्या, ते = तव, टीका, हरेरुत्तराङ्गे = सव्यबाहौ, साम्नि , मूर्ध्नि = यजुषि, मालिन्यं = मलिनता, तस्य क्षालनं अंभः = उदकं स्वयं अजनि = बभूव , हे व्रतिसुमतिमणे = व्रतिनश्चते सुमतयश्च तेषां मणे = श्रेष्ठ, हे राघवेन्द्र, ऋचां, सैव = त्वत्संबन्धिनी टीका, अनन्यसंपर्कभाजां मध्ये, ओजिष्टे दक्षिणाङ्गे= दक्षिणबाहौ , मृगमदमिलितोदारपाटीरसारः = मृगमदेन = कस्तूर्या, मिलितः = संबद्धश्चासौ उदारः = उत्कृष्टश्चासौ पाटीरसारः = श्रीगंधश्रेष्ठः , अजनीत्यर्थः । अनेन यजुःसामसंबन्धि व्याख्यानं परापव्याख्यानमालिन्यक्षालनोदकमासीत् । ऋक्संबन्धिनी व्याख्या परापव्याख्यानाभावेन परमात्मनः दक्षिणबाहौ परिमलसदृशोऽभूदिति भावः ॥२९॥

**ज.व्या.**:-ऋग्यजुस्सामसंबंधिव्याख्याकर्तृत्वेन स्तौति॥ हृद्येति ॥ परविवृतयजुस्सामसंबंधिनी परैः भाट्टभास्करविद्यारण्यप्रभृतिभिः विवृते यजुस्सामनी तयोस्संबंधिनी, हृद्या मनोज्ञा, अनवद्या दोषरहिता, ते तव, टीका यजुःसामसंबंधिन्योः व्याख्या, हरेरुत्तरांगे सव्यबाहौ । 'सामोत्तरः पक्ष' इति श्रुतेः । मूर्ध्नि यजुषि च । 'तस्य यजुरेव शिर' इत्युक्तेः । मालिन्यक्षालनांभः मालिन्यस्य अपव्याख्यानलक्षणमलिनतायाः, क्षालनं प्रक्षालनं, तस्य अंभः उदकं स्वयमेवाजनि अभूत् । यजुःसामसंबंधि उपनिषद्व्याख्यानं परकृतव्याख्यानलक्षणमालिन्यपरिहारकमिति भावः । हे व्रतिसुमतिमणे व्रतयश्च सुमतयश्च व्रतिसुमतयः तेषां मणे श्रेष्ठ, श्रीराघवेन्द्र । यद्वा राघवेन्द्रव्रतिसुमतिमणे राघवेन्द्रव्रत्याख्य-

सुमतिश्रेष्ठ । अनन्यसंपर्कभाजां अन्यव्याख्यासंबंधरहितां, ऋचां ऋग्वेदसंबंधिनीनां ऋचामुपनिषदां च, सैव त्वत्संबंधिनी टीकैव, ओजिष्ठे दीप्तिमति, दक्षिणाङ्गे दक्षिणबाहौ । "ऋग्दक्षिणःपक्ष" इति श्रुतेः । मृगमदमिलितोदारपाटीरसारः मृगमदेन कस्तूर्यादिना मिलितः मिश्रितः उदार उत्कृष्टः पाटीरसार गन्ध इव तत्तुल्यरूपः । ऋक्संबंधि व्याख्यानं तु परकृतव्याख्यानाभावेन महापरिमल-मिलितचन्दनसदृशमभूदिति भावः ॥

अत्र यजुःसामसंबंधिव्याख्यानयोः मालिन्यक्षालनोदकत्वेन निरूपणात् ऋग्व्याख्यानस्य कस्तूरिमिलितपाटीरसारत्वेन वर्णनात् अन्यव्याख्याधिक्यावर्णनात् ? अनुभयाभेदरूपकालंकारः । "विषय्यभेदताद्रूप्यरंजनं विषयस्य यत् । रूपकं तु त्रिधाधिक्यं नूनत्वानुभयोक्तिभि" रिति लक्षणोक्तेः ॥३१॥

**नूनं वाक्यानुरोधि प्रकरणमखिलं नेयमित्युक्तमुच्चैः**
**प्राचां वाचांयमेन प्रकटितविभवानंतवेदांतवाचा ॥**
**स्वामिन्नेतत्प्रतीयुः कथमिव कवयो राघवेन्द्र व्रतीन्दो**
**येन त्वद्वाक्यजातं प्रकरणनिकरं(मखिलं) तावदद्यानुरुंधे ॥३०॥**

**व.व्या.**:- दशप्रकरणटीकाव्याख्याकर्तृत्वेन स्तौति ॥नूनमिति॥ वाचांयमेन = नियामकेन , प्रकटितविभवानंतवेदांतवाचा = प्रकटितविभवानि अनंतानि वेदांतवचांसि = उपनिषद्वाक्यानि येन सः तेन, प्राचां = पूर्वाचार्याणां, अखिलं प्रकरणं, वाक्यानुरोधि = वाक्यानुसारि , नेयं = नेतव्यमित्येतदुच्चैः "श्रुतिलिंगं समाख्या

चे'' त्यादि प्रमाणेनोक्तम् । व्रतीनां इंदुः = चंद्र इव , तस्य संबुद्धिः हे राघवेन्द्रस्वामिन्, कवयः = पंडिताः , एतत् = वाक्यापेक्षया प्रकरणस्य दौर्बल्यं, कथमिव प्रतीयुः = जानीयुः, येन = कारणेन त्वद्वाक्यजातमेव व्याख्यानरूपत्वात्, प्रकरणनिकरं = आचार्यकृतप्रकरणसमूहं, अद्य अनुरुंधे = अनुसरति । अतः कथं जानीयुरिति विरोधाभासः ॥ ३० ॥

**ज.व्या.**:- इदानीं दशप्रकरणटीकाव्याख्याकर्तृत्वेन स्तौति ॥ नूनमिति ॥ अखिलं समस्तं प्रकरणं एकप्रमेयप्रतिपादकवाक्यरूपं प्रकरणं , वाक्यानुरोधि निराकांक्षपदसमूहरूपवाक्यानुगुणे यथा तथा, नेयं अर्थवर्णनं कार्यं, प्रकरणापेक्षया वाक्यस्य बलवत्वादिति। प्रकटितविभवानंतवेदांतवाचा प्रकटितं प्रकाशितं विभवं वैभवं यासां ताः,अनंतानामपरिमितानां वेदांतानामुपनिषदां वाचः निर्णायकसूत्र-रूपवाचः यस्य तेन । प्राचा पुरातनेन, वाचंयमेन मुनिना व्यासेन। ''श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीयं स्यादि'' ति वचनेन, ''श्रुतिलिङ्गवाक्यप्रकरणेति'' सूत्रेण च । उच्चैः सम्यक्, उक्तं भाषितं, इति नूनं निश्चयः । राघवेन्द्रव्रतीन्दो राघवेन्द्राख्ययतिचंद्र, हे स्वामिन्, कवयः पंडिताः, एतत् वाक्यानुसारेण प्रकरणं नेयमित्येतत् , कथमिव प्रतीयुः कथं जानीयुः, येन कारणेन त्वद्वाक्यजातं तव पदसमूहात्मकवाक्यजातम् । कर्ता। प्रकरणनिकरं दशप्रकरणसमूहं तावत् व्युत्क्रमेण अद्येदानीं अनुरुंधे अनुसरति । प्रकरणानुसारिवाक्यजातमित्यर्थः ॥

अतो विरोधप्रतीतेः विरोधाभासालङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास' इति तल्लक्षणात् ॥३२॥

**विख्यातश्रीसुधीन्द्रव्रतिसुत भवता साधुगीते सुतर्के**
**सद्यः प्रत्यर्थिहृद्ये मुनिमणिरचिते तांडवे योजितार्थे ॥**
**प्रत्याख्यातप्रकाशः समजनि भुवने चाद्य चिंतामणिस्त्वं**
**ब्रूहि श्रीराघवेन्द्र व्रतिविबुधमणे कस्त्वदन्यो वदान्यः ॥३१॥**

**व.व्या.:-** तर्कतांडवव्याख्याकर्तृत्वेन स्तौति ॥ विख्यातेति ॥ विख्यातश्चासौ श्रीसुधीन्द्रव्रती च तस्य सुत, व्रतिविबुधमणे = व्रतिन एव विबुधास्तेषां मणे = श्रेष्ठ, हे राघवेन्द्र, साधुभिः = सज्जनैः, गीते = गायमाने, सुतर्के = शोभनास्तर्काः = युक्तयः यस्य सस्तस्मिन्, मुनिमणिः = व्यासराजः, तेन रचिते = कृते , तांडवे= तांडवाख्ये ग्रंथे, सद्यः , प्रत्यर्थिनां = मतांतरस्थानां , हृद्ये = मनोहरे, भवता = त्वया, योजितार्थे = योजिताः = योजिनीयाः अर्थाः यस्मिन् सः तस्मिन् सति, चिंतामणिः = तन्नामको ग्रंथः, भुवने = लोके , अद्य , प्रत्याख्यातप्रकाशः = प्रत्याख्यातः तिरस्कृतः प्रकाशः कीर्तिर्यस्य सः, समजनि = बभूव, अतस्त्वदन्यः, वदान्यः= दानशौंडः, कस्त्वं ब्रूहि , न कोऽपीत्यर्थः , । नर्तने कृते सति , चिंतामणिधिक्कारिपदार्थदातुः सकाशात्को वदान्य इति भावः ॥ ३१ ॥

**ज.व्या.:-** इदानीं तर्कतांडवव्याख्याकर्तृत्वेन स्तौति ॥ विख्यातेति॥ विशेषेण ख्यातः विख्यातः, श्रीसुधीन्द्रव्रती तस्य सुतः तनयः । राघवेन्द्रव्रतिविबुधमणे राघवेन्द्राख्यव्रतिश्रेष्ठ, भवता त्वया, साधुगीते ग्रंथपक्षे साधुभिः सज्जनैः गीते पठिते । नृत्यपक्षे समीचीनगानोपेते । सुतर्के शोभनाः तर्काः युक्तयो यस्मिन् तथोक्ते। नृत्यपक्षे सुतर्के शोभननयोपेते । मुनिमणिरचिते मुनिमणिना व्यासराजेन रचिते। यद्वा मुनिना व्यासराजेन मण्याख्यग्रंथोपरि दूषणतया रचिते कृते । नृत्यपक्षे मुन्या पराकांक्षया, मण्या श्रेष्ठया वारस्त्रिया रचिते । "पराकांक्षासंयमे

च मुनिरि'' ति कोशात्। तांडवे तर्कतांडवाख्यग्रंथे, नामैकदेशे नामग्रहणं भीमो भीमसेन इतिवत्। अन्यपक्षे तांडवे नर्तनि। ''तांडवं नटनं नाट्यं'' इत्यमरः। सद्यस्संप्रति, प्रत्यर्थिहृद्ये प्रत्यर्थिनां प्रतिवादिनां हृद्ये हृत्प्रिय- कृते। ''हृत्प्रियकृते हृद्यमि'' तिरत्नमाला, ''प्रत्यर्थिपरिपंथिन'' इत्यमरः। पूर्वोक्ततर्कतांडवे नर्तनि च अर्थैरभिधेयैर्वाक्यार्थैः योजिते संबद्धतया प्रतिपादिते। प्रत्यर्थिहृद्ये इत्युभयत्रापि संबंधः। अर्थैः धनैस्सद्यः योजिते सति, प्रत्याख्यातप्रकाशः प्रत्याख्यातः निराकृतः, प्रकाशः मणि- प्रकाशाख्यग्रंथः यस्य तथोक्तः। ''प्रत्याख्यातो निराकृत'' इत्यमरः। चिंतामणिः तन्नामकग्रंथः। नृत्यपक्षेप्रत्याख्यातः निराकृतः प्रकाशः यस्य तथोक्तः। चिंतामणिः, दातृत्वेन प्रसिद्धः, चिंतामणिः, भुवि जगति, समजनि सम्यगभूत्। सम् पूर्वाज्जनिप्रादुर्भाव इति धातोर्लुङ्। श्रीराघवेन्द्र त्वदन्यः वदान्यः दानशौंडः। ''स्युर्वदान्यस्थूललक्ष्य- दानशौंडा बहुप्रदे'' इत्यमरः। न कोऽपीत्यर्थः। अस्मिन् त्वं ब्रूहीत्यर्थः। ''ब्रूञ् व्यक्तायां वाचीति धातुः।

अत्र तर्कतांडवस्य वर्ण्यमानत्वेनोभयसादृश्यात् पदार्थानां नानार्थश्लेषालङ्कारः ॥३३॥

**प्रौढानेकप्रबन्धप्रवचनरचनालब्धविश्रब्धकीर्ते -**
**स्ते किं न्यायामृतस्याविवरणविधिना राघवेन्द्रायशः स्यात् ॥**
**यद्राज्यप्रच्यवेनाखिलभुवनपतेः राघवस्येव कीर्तिः**
**लब्धैव प्रत्युतालं गुरुचरणकृतामोदनिर्वाहजन्या ॥३२॥**

**व.व्या.**:-न्यायामृतविवरणाकरणप्रयोजनमाह ॥ प्रौढेति ॥ प्रौढाश्च ते अनेकाश्च ते प्रबन्धाः = ग्रंथाश्च तेषां प्रवचनानि = व्याख्यानानि तेषां रचना = करणं तया लब्धा विश्रब्धा कीर्तिर्यस्य सः तस्य, ते=

तव , न्यायामृतस्य, अविवरणविधिना = व्याख्यानाकरणेन , अयशः = असामर्थ्यरूपापकीर्तिः , किं स्यात् ? = न स्यादेव , प्रत्युत यत् = यस्मात्करणात्, राज्यप्रच्यवेन = राज्यं त्वक्त्वा वनं प्रति गमनेन , अखिलभुवनपतेः , राघवस्य = रामचंद्रस्येव , गुरुचरणेन= विजयीन्द्रस्वामिना, कृतो य आमोदः = आमोदाख्यग्रंथश्च , तस्य निर्वाहः = प्रचयादिस्तेन जन्या कीर्तिर्लब्धा= प्राप्तैव , अतो नायश इति भावः ॥३२॥

**ज.व्या.**:- इदानीं राघवेन्द्रगुरोर्न्यायामृतव्याख्याऽकरणेन कीतिरिव लब्धेत्याह ॥ प्रौढेति ॥ प्रौढाः महांतः, अनेके बहवः, प्रबंधा ग्रन्थाः, तेषां प्रवचनानां व्याख्याननां, रचनया करणेन, लब्धा प्राप्ता, विस्रब्धा विस्तृता, कीर्तिर्यस्य सः तथोक्तः । तस्य ते न्यायामृतस्य व्यासराजरचिततन्नामकग्रन्थस्य अविवरणविधिना व्याख्यान-करणाभावेन अयश अपकीर्तिस्स्यात्किं भूयात्किं नाभूदित्यर्थः । सर्वप्रबन्धव्याख्याकरणेन महासामर्थ्यमस्तीति कीर्तिस्स्वत एव प्राप्तेतिभावः । प्रत्युत यस्मात् कारणात् राज्यप्रच्यवेन चतुर्दश-वर्षपर्यंतं राज्यं त्यक्त्वा वनं प्रति गमनेन, अखिलभुवनपतेस्समस्त-भूमंडलाधिपस्य , राघवस्येव रघुकुलोत्पन्नस्य रामभद्रस्येव । गुरुचरणकृतामोदनिर्वाहजन्या । रामपक्षे गुरुचरणेन दशरथेन कृतः रचितः आमोदः हर्षः संतोष इति यावत् । तस्य, निवहिण नितरां प्रापणेन । अन्यार्थस्तु गुरुचरणैर्विजयीन्द्रस्वामिभिः कृतानां बहुलामोदमध्यमामोदलघ्वामोदादिग्रंथानां, निर्वाहेण नितरां स्थापनेन, जन्योत्पन्ना कीतिरिव सम्यक् लब्धेत्यर्थः ॥

यथा रामचंद्रस्य गुरुचरणदशरथवाक्यस्य करणप्रयुक्तामोद-निर्वाहजन्यकीर्तिर्लब्धेत्युक्त्या गुरुचरणश्रीजयीन्द्रस्वामिकृता-

मोदनामकग्रंथस्थापनजन्यकीर्तिरिव लब्धेत्युक्त्या च तत्सादृश्य-वर्णनात् पूर्णोपमालंकारः ॥३४॥

**वाचा संक्षिप्तया यद्बहुचरितमुपावर्णयस्त्वं मुरारेः**
**किञ्च श्रीराघवेन्द्र व्रतिप रघुपतेस्तेन नो विस्मयेऽहम् ॥**
**किं वा दुःसाध्यमस्ति त्रिजगति महतामात्मनः पाणिपद्मे**
**यस्या(पश्या)मंदोमरंदः किल घटजनुषा चोलिराकारि सिंधुः**
**॥ ३३ ॥**

**व.व्या.**:-कृष्णचारित्ररामचारित्रादिग्रन्थकर्तृत्वेन स्तौति ॥ वाचेति॥ हे व्रतिप, श्रीराघवेन्द्र, त्वं , संक्षिप्तया = संकुचितया , वाचा = ग्रन्थेन , मुरारेः = श्रीकृष्णस्य, बहुचरितं, उपावर्णयः = अकथयः, किञ्च रघुपतेः = रामदेवस्य, बहुचरितं उपावर्णयः, तेन= अल्पवाक्येन बह्वर्थाभिधानेन, अहं , नो विस्मये = आश्चर्यवान् नास्मि, तादृशानां महतां = महात्मनां, त्रिजगति, दुःसाध्यं किमस्ति, यस्य = येन , घटात् = कुंभात् जनुः = जन्म यस्य सस्तेन अगस्त्येन ,अमंदः = अनल्पः, सिन्धुः = समुद्रः, आत्मनः पाणिपद्मे, मरंदः = मकरंदरस इव, चोलिः = आपोशनभूतः, अकारि = कृतः। कर्मणि लुङ् । अतो न विस्मयार्हमिति भावः ॥ ३३॥

**ज.व्या.**:-इदानीं कृष्णचारित्र्यमंजरीरामचारित्र्याख्यग्रंथकर्तृत्वेन स्तौति ॥ वाचेति ॥ हे श्रीराघवेन्द्रव्रतिप , त्वं , संक्षिप्तया संकुचितया, वाचा वाक्येन, मुरारेः श्रीकृष्णस्य, किंच रघुपतेः श्रीरामचंद्रस्य, बहुचरितमनेकचरितं, उपावर्णयः वर्णनं कृतवानसि । तेनाल्पवाचा बहुमाहात्म्यकथनेन । अहं नो विस्मये अहं नाश्चर्यवानस्मि । त्रिजगति लोकत्रये, महतां महानुभावानां,

दुःसाध्यं असाध्यं , किमस्ति न किंचिदपीत्यर्थः । पश्य, घटजनुषा घटोत्पत्तिमता कुंभसंभवेनेत्यर्थः । (मौनिना) अगस्त्येन ऋषिणा, सिंधुस्समुद्रः आत्मनः स्वस्य, पाणिपद्मे करकमले, चोलिरापोशनमभूत् । अमंद् अनत्यल्पः, मरंदः मकरंदकणसदृशः अकारि किल कृतः किल । डुकृञ्करण इतिधातोः कर्मणि लुङ् । महतां संकुचितबुध्या? (वाचा) अल्पवाचा बहुचरितवर्णनं नाश्चर्यमिति भावः ॥३५॥

**मंत्रिश्रीनीलकंठाभिधमखिमणिना भट्टतन्त्रानुबन्धे**
**ग्रन्थे तावत्त्वदीये करिणि गुणविदारोपितेऽभ्यर्हणाय ॥**
**कीर्तिस्ते राघवेन्द्र व्रतिसुमतिमणे नूनमन्यूनवेगा(त्)**
**दिङ्नागानारुरुक्षुः स्वयमपि सहसाधावदष्टौ दिगंतान् ॥३४॥**

**व.व्या.**:- भट्टतन्त्राख्य (भाट्टसंग्रहाख्य) ग्रन्थकर्तृत्वेन स्तौति ॥ मंत्रीति ॥ गुणविदा = गुणज्ञेन, मंत्री चासौ श्रीनीलकंठाभिधश्चासौ मखिमणिश्च = यज्ञयजमानशिरोमणिः तेन, करिणि = महागजे, त्वदीये = त्वत्संबन्धिनि, भट्टतन्त्रानुबन्धे = भट्टतन्त्रानुसारिणि ग्रन्थे , अभ्यर्हणाय = बहुमानाय, आरोपिते सति = स्थापिते सति, हे व्रतिसुमतिमणे, हे श्रीराघवेन्द्र, ते कीर्तिः, अन्यूनवेगात् = बहुवेगात् , दिङ्नागान् = दिग्गजान् , आरुरुक्षुः = ओढुमिच्छुः सती, स्वयमपि, सहसा = अविचारेण, अष्टौ = अष्टसंख्याकान् , दिगंतान् = दिशामंतर्भागान् अधावत् = अगमत् इति भातीति भावः ॥ ३४ ॥

**ज.व्या.**:- इदानीं भाट्टसंग्रहाख्यपूर्वमीमांसाग्रंथकर्तृत्वेन स्तौति ॥ तन्त्रश्रीरिति ॥ गुणविदा गुणज्ञेन, तंत्रश्रीनीलकंठाभिधमखि-

मणिना तंत्रं स्वशास्त्रसिद्धान्तः तस्य श्रीः संपत् यस्य सः तथोक्तः । नीलकंठ इति अभिधा आख्या यस्य सः तथोक्तः । मखः यागः येषामस्तीति मखिनः, तेषां मणिः श्रेष्ठः । नीलकंठाभिधश्चासौ मखिमणिश्च नीलकंठाभिधमखिमणिः । तन्त्रश्रीश्चासौ नीलकंठाभिधमखिमणिश्च तेन, नीलकंठदीक्षितश्रेष्ठेन । अभ्यर्हणायै पूजायै, त्वदीये त्वत्संबंधिनि भट्टतंत्रानुबंधे भट्टसिद्धान्तानुसारिणि तावत् तस्मिन्प्रसिद्धे ग्रंथे भाट्टसंग्रहाख्यग्रंथे करिणि गजस्कन्धे , आरोपिते सति गजस्कन्धारोपणेन ग्रामप्रदक्षिणे कारिते सति । हे राघवेन्द्रव्रतिसुमतिमणे , ते तव , कीर्तिः , अन्यूनवेगा अक्षीणवेगा सती, दिङ्नागान् आरुरुक्षुः आरोहणेच्छुः, स्वयमपि स्वयमेव, सहसा अतर्कितं यथा तथा, अष्टौ दिगन्तान् अष्टसंख्याकदिशामंतान्, अधावत अगमत् । नूनं निश्चयः ॥

भाट्टसंग्रहाख्यग्रंथस्य गजस्कन्धारोपणेन संजातकीर्तिर्दिग्गजारोहणार्थं अविदितं यथातथा दिगंतानधावदित्युत्प्रेक्षणात् उत्प्रेक्षाव्यंजकनूनंशब्दात् हेतूत्प्रेक्षालंकारः ॥३६॥

**व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः**
**प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ॥**
**मौनीशव्यासराजादुदितकिसलयः पुष्पितोऽयं जयीन्द्रा-**
**दद्यश्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ॥३५॥**

**व.व्या.** :- श्रीमध्वसिद्धान्तप्रतिष्ठापनाचार्यत्वेन स्तौति ॥ व्यासेनेति ॥ श्रुतिः= वेद एव, भूः , तस्यां , व्यासेन = वेदव्यासेन, व्युप्तं = स्थापितं, बीजं यस्य सः , भगवत्पादेन लब्धा अंकुरश्रीः = अङ्कुरसंपत् यस्य सः, प्रत्नैः = प्राचीनैः आचार्यैः , ईषत्प्रभिन्नः =

स्वल्पमुद्गतः , जयमुनिना = टीकाकारेण , सम्यक् उद्भिन्नाः = उद्गताः शाखाः = स्कंधाः यस्य सः,अजनि , मौनीशश्चासौ व्यासराजश्च तस्मात्, उदितानि = जातानि , किसलयानि = पत्राणि यस्य सः , जयीन्द्रात् = विजयीन्द्रात् , पुष्पितः = सञ्जातपुष्पः , अद्य , श्रीराघवेन्द्रात् फलितः = सञ्जातफलः, मध्वसिद्धान्त एव शाखी = शाखाः = स्कंधाः अस्मिन् संतीति , विलसति = शोभते । विपूर्वाल्लसतेर्लटि रूपमेतत् ॥३५॥

**माद्यदद्वैतविद्यावद्गर्वनिर्वापणक्षमः ॥**
**वादीन्द्रयतिराट् तेने भक्त्या गुरुगुणस्तवम् ॥३६॥**

**॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीमदुपेन्द्रतीर्थगुरुपादशिष्येण श्रीमद्वादीन्द्रतीर्थेन विरचितः गुरुगुणस्तवः समाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥**

व.व्या.:-स्वकृतगुरुगुणस्तवं पठतामादौ रुच्युत्पादनाय कर्तृत्वेन स्तौति (पठति) ॥ माद्यदिति ॥ स्पष्टोऽर्थः॥३६॥

**इतिश्रीमत्सर्वतन्त्रस्वतन्त्रवादीन्द्रतीर्थविरचित गुरुगुणस्तवव्याख्या श्रीमत्सर्वतन्त्रस्वतन्त्रवसुधेन्द्रतीर्थविरचिता समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥ श्रीराघवेन्द्रार्पणमस्तु ॥**

**इति श्रीराघवेन्द्रार्योभयवंशाब्धिचंद्रमाः ।**
**उपेन्द्रसूनुर्वादींद्रश्चक्रे गुरुगुणस्तवम् ॥३७॥**

**॥इति श्रीगुरुगुणस्तवनं संपूर्णम् ॥ ॥श्रीकृष्णार्पणमस्तु ॥**

**॥ इति श्रीयतिकुलतिलकवादीन्द्रपूज्यचरणांतेवासि - जयरामार्येण विरचिता गुरुगुणनुतिव्याख्या समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥ श्रीराघवेन्द्रार्पणमस्तु ॥**

# गुरुगुणस्तवने गुरुप्रार्थनाः

१. पातु श्रीनेतुरस्मान्सपदि बुधजनत्राणदक्षः कटाक्षः । (१)
२. चेतो न प्रजहातु जातुचिदिह स्वर्गेऽपवर्गेऽपि नः । (२)
३. निसर्गेहितं कारुण्यं कुरु । (२)
४. मा कृथा मयि पुनर्दुर्गे विसर्गे मतिम् । (२)
५. भूयात्कीशावनीशव्रतितनुरनिलः श्रेयसे भूयसे नः । (३)
६. रूपे लोकैकदीपे प्रसरतु हृदयं मामकं मध्वनाम्नि । (४)
७. जीयादन्यैरजय्यः त्रिभुवनविदिताश्चर्यचर्यो जयार्यः । (५)
८. श्रेयो भूयो विदध्यात्सुमहितमहिमा संप्रति व्यासराजः । (७)
९. पुष्णातु श्रीजयीन्द्रः त्रिभुवनविदितः सर्वतन्त्रस्वतन्त्रः । (८)
१०. विख्यातश्रीसुधीन्द्रव्रतिपतिरतुलं भद्रमुन्निद्रयेन्नः । (९)
११. धीर श्रीराघवेन्द्रः स दिशतु सततं भव्यमव्याहतं नः ।(१०)

# सुभाषितानि / नीतिवाक्यानि

१. पातु श्रीनेतुरस्मान् सपदि बुधजनत्राणदक्षः कटाक्षः ॥१॥
२. भूयात्कीशावनीशव्रतितनुरनिलः श्रेयसे भूयसे नः ॥३॥
३. रूपे लोकैकदीपे प्रसरतु हृदयं मामकं मध्वनाम्नि ॥४॥
४. जीयादन्यैरजेयः त्रिभुवनविदिताश्चर्यचर्यो जयार्यः ॥५॥
५. श्रीरामव्यासदासो विलसति विबुधेन्द्राभिधः संयमीन्द्रः ॥६॥
६. श्रेयो भूयो विदध्यात्सुमहितमहिमा संप्रति व्यासराजः ॥७॥
७. पुष्णातु श्रीजयीन्द्रस्त्रिभुवनविदितः सर्वतन्त्रस्वतन्त्रः ॥९॥
८. विख्यातः श्रीसुधीन्द्रव्रतिपतिरतुलं भद्रमुन्निद्रयेन्नः ॥९॥
९. धीरश्रीराघवेन्द्रः स दिशतु सततं भव्यमव्याहतं नः ॥१०॥
१०. योगो यः कर्मनामा कविभिरभिहितः यश्च विज्ञानसंज्ञः
शक्तो नासिद्धकायः तनुमतिरनयोस्तावदावर्जनेऽहम् ।
११. वन्ध्यैवातः प्रतिज्ञा तदतुलनिखिलाश्चर्यचर्याभिधाने ।
स्थानेथापि क्वचित्स्यादिह पुनरुदधिस्नानसंकल्पवत्सा ॥१४॥

१२. चित्ते नायुक्तमर्थं कलयति सहसा नाभिधत्ते न सद्भिः
साकं मीमांसते वा न लिखति वचसोद्घाटयत्याशयं स्वम् ॥
उक्तं नो वक्ति भूयः क्वचिदपि लिखितं नैव निर्मार्ष्टि तस्मात्
अस्माभिः सत्प्रबन्धप्रणयनविषये स्तूयते राघवेन्द्रः ॥१५॥

१३. लोके साधु व्यधायि श्रुतगुण भवताऽऽचार्यचर्यानुवृत्तिः ॥२४॥

१४. न स्यादीशप्रसादो गुरुवरकरुणामन्तरेणेति रूढो ।
धीरश्रीराघवेन्द्र व्रतिवर सुदृढश्चेतसस्ते विपाकः ॥ २६ ॥

१५. यावद्वेदान्तखण्डप्रवचनकृतिनि प्रेम भूमा न तादृक् ।
सर्वाम्नायप्रवक्तर्यनुपमचरिते राघवेन्द्रव्रतीन्द्रे ॥

१६. इत्येतद्देहभाजामतिविशदरुचौ जागरूकेऽपि लोके ।
राकाचन्द्रे द्वितीयाशशिशकलनतिन्यायमेवानुरुन्धे ॥३०॥

१७. नूनं वाक्यानुरोधि प्रकरणमखिलं नेयमित्युक्तमुच्चैः
प्राचां वाचंयमेन प्रकटितविभवानंतवेदान्तवाचा ।

१८. ब्रूहि श्रीराघवेन्द्रव्रतिविबुधमणे कस्त्वदन्यो वदान्यः ॥३५॥

१९. व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धांकुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ॥
मौनीशव्यासराजादुदितकिसलयः पुष्पितोऽयं जयीन्द्रात्
अद्य श्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ॥३७॥

## लौकिकन्यायाः

१. खले कपोतन्यायः (१)
२. गन्जागेहन्यायः (६)
३. सूचीकटाहन्यायः (१२)
४. अशोकवनिकान्यायः (१२)
५. हस्ति मशकन्यायः (१२)
६. स्वामिभृत्यन्यायः (७)
गुरुशिष्यन्यायः (१७)
७. द्वितीयाशशिशकलनतिन्यायः (२८) इत्यादयः ॥

ಶ್ರೀಮದ್ರಾಘವೇಂದ್ರತೀರ್ಥರು ಮಂತ್ರಾಲಯಂ (ಶ್ಲೋಕ ೧೦)



|| ಶ್ರೀಃ ||

ಶ್ರೀಮದ್ವಾದೀಂದ್ರತೀರ್ಥ ವಿರಚಿತಂ

# ಗುರುಗುಣಸ್ತವನಂ

ಉನ್ಮೀಲನ್ನೀಲನೀರೇರುಹನಿವಹಮಹಃಪುಷ್ಟಿಮುಷ್ಟಿಂಧಯಿಶ್ರೀಃ
ಶ್ರೀಭೂದುರ್ಗಾದ್ಯಗಂತಪ್ರಚಯಪರಿಚಯೋದಾರಕಿರ್ಮೀರಭಾವಃ ।
ಸ್ವೈರಕ್ಷೀರೋದನಿರ್ಯಾಚ್ಛಶಿರುಚಿನಿಚಯಾಽಖರ್ವಗರ್ವಾಪನೋದೀ
ಪಾತು ಶ್ರೀನೇತುರಸ್ಮಾನ್ ಸಪದಿ ಬುಧಜನತ್ರಾಣದಕ್ಷಃ ಕಟಾಕ್ಷಃ || ೧ ||

ಮಾತಸ್ತ್ವಾಮುಪಕಲ್ಪಿತಾಖಿಲಜಗತ್ಸರ್ಗೇಽಜಭರ್ಗೇಡಿತೇ
ಚೇತೋ ನ ಪ್ರಜಹಾತು ಜಾತುಚಿದಿಹ ಸ್ವರ್ಗೇಽಪವರ್ಗೇಽಪಿ ನಃ ।
ಲಾವಣ್ಯಾದಧರೀಕೃತಾಮರವಧೂವರ್ಗೇ ನಿಸರ್ಗೇಹಿತಂ
ಕಾರುಣ್ಯಂ ಕುರು ಮಾಕೃಥಾ ಮಯಿ (ತ್ವಯಿ) ಪುನರ್ದುರ್ಗೇ ವಿಸರ್ಗೇ ಮತಿಮ್ || ೨ ||

ಶ್ರೀಮದ್ರಾಮಾಭಿರಾಮಾಮಿತಮಹಿಮಪದಪ್ರೌಢಪಾಥೋರುಹಾಲಿಃ
ಕೃಷ್ಣಾನಿಷ್ಟಾಮಿತಕ್ಷ್ಮಾಪರಿವೃಢಪಟಲೀಪಾಟನೈಕಪ್ರವೀಣಃ ।
ವೇದವ್ಯಾಸೋಪದೇಶಾಧಿಕಸಮಧಿಗತಾನಂತವೇದಾಂತಭಾವೋ
ಭೂಯಾತ್ಕೀಶಾವನೀಶವ್ರತಿತನುರನಿಲಃ ಶ್ರೇಯಸೇ ಭೂಯಸೇ ನಃ || ೩ ||

ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರವ್ಯವಸಿತನಿಖಿಲಾಭಿಜ್ಞಹೃದ್ಯಾನವದ್ಯಾ-
ನಂತತ್ರಯ್ಯಂತಭಾವಪ್ರಕಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರೇ ।
ಸಂವರ್ಣ್ಯೇ ಮಂತ್ರವರ್ಣ್ಯೈರನಿತರವಿಷಯಸ್ಪರ್ಶಿಭಿಃ ಪಾವಮಾನೇ
ರೂಪೇ ಲೋಕೈಕದೀಪೇ ಪ್ರಸರತು ಹೃದಯಂ ಮಾಮಕಂ ಮಧ್ವನಾಮ್ನಿ || ೪ ||

ವಿಜ್ಞಾನೋದರ್ಕತರ್ಕಪ್ರತಿಪದಮಧುರೋದಾರಸಂದರ್ಭಗರ್ಭ-
ಪ್ರೌಢಾನೇಕಪ್ರಬಂಧಪ್ರಕಟಿತಭಗವತ್ಪಾದಭಾಷ್ಯಾದಿಭಾವಃ ।
ಮಿಥ್ಯಾವಾದಾಪವಾದಪ್ರಕುಪಿತವಿಮತಧ್ವಾಂತಸಂತಾನಭಾನುಃ
ಜೀಯಾದನ್ಯೈರಜಯ್ಯಃ ತ್ರಿಭುವನವಿದಿತಾಶ್ಚರ್ಯಚರ್ಯೋ ಜಯಾರ್ಯಃ ||೫||

ಶ್ರೀಮತ್ಪೂರ್ಣಪ್ರಬೋಧಪ್ರಕಟಿತಪದವೀಧಾವಿಮೇಧಾವಿಧೀಮತ್-
ಸೇನಾನಾಸೀರಸೀಮಾಸಮುದಿತವಿದಿತಾಬಾಧಯೋಧಾಧಿನೇತಾ ।
ಮಾಯಾಸಿದ್ಧಾಂತದೀಕ್ಷಾವಿಘಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರಃ
ಶ್ರೀರಾಮವ್ಯಾಸದಾಸೋ ವಿಲಸತಿ ವಿಬುಧೇಂದ್ರಾಭಿಧಸ್ಸಂಯಮೀಂದ್ರಃ ||೬||

ಮಾಯಾತಂತ್ರಾಮರಾರಿಸ್ಮಯಮಪನಯತೋ ಮಧ್ವಸಿದ್ಧಾಂತನಾಮ್ನೋ
ನೇತ್ರಾಣೀವ ತ್ರಯೋಽಪಿ ತ್ರಿಜಗತಿ ನೃಹರೇರಿಂಧತೇ ಯತ್ಪ್ರಬಂಧಾಃ ।
ಯದ್ವಾಗದ್ವೈತವಿದ್ಯಾಚಲಕುಲಕುಲಿಶಪ್ರೌಢಿಮಾಢೌಕತೇ ಸಃ
ಶ್ರೇಯೋ ಭೂಯೋ ವಿದಧ್ಯಾತ್ಸುಮಹಿತಮಹಿಮಾ ಸಂಪ್ರತಿ ವ್ಯಾಸರಾಜಃ ॥೭॥

ಚಾತುರ್ಯೈಕಾಕೃತಿರ್ಯಶ್ಚತುರಧಿಕಶತಗ್ರಂಥರತ್ನಪ್ರಣೇತಾ
ಧೂತಾರಾತಿಪ್ರಬಂಧಃ ಸ್ಫುಟವಿದಿತಚತುಃಷಷ್ಟಿವಿದ್ಯಾವಿಶೇಷಃ ।
ಸೋಽಯಂ ನಃ ಶ್ರೀಸುರೇಂದ್ರಪ್ರತಿವರತನಯೋಽದ್ವೈತಶೈವಾಸಹಿಷ್ಣುಃ
ಪುಷ್ಣಾತು ಶ್ರೀಜಯೀಂದ್ರಸ್ತ್ರಿಭುವನವಿದಿತಸ್ಸರ್ವತಂತ್ರಸ್ವತಂತ್ರಃ ॥ ೮ ॥

ವ್ಯಾಧೂತಾವದ್ಯಹೃದ್ಯಾಮಿತಕೃತಿರಚನಾಚಾರುಚಾತುರ್ಯಹೃಷ್ಯತ್-
ಕರ್ಣಾಟಕ್ಷೋಣಿಪಾಲಪ್ರತಿಪದರಚಿತಾನೇಕರತ್ನಾಭಿಷೇಕಃ ।
ಪತ್ರೀಶಾರೂಢಲಕ್ಷ್ಮೀಪತಿಪದನಲಿನೋದಗ್ರರೋಲಂಬಲೀಲೋ
ವಿಖ್ಯಾತಶ್ರೀಸುಧೀಂದ್ರವ್ರತಿಪತಿರತುಲಂ ಭದ್ರಮುನ್ನಿದ್ರಯೇನ್ನಃ ॥ ೯ ॥

ಧೂತಾವದ್ಯೈರವಿದ್ಯಾವಿಘಟನಪಟುಭಿರ್ವಿದ್ವದಭ್ಯರ್ಥನೀಯೈಃ
ವಾಚಃ ಪ್ರಾಚಾಂ ಪ್ರವಾಚಾಮುಪಚಯಮಭಜನ್ ಯತ್ಕೃತಗ್ರಂಥಜಾಲೈಃ ।
ಸಂಖ್ಯಾವಂತೋ ಯಮಾಹುರ್ಮುಹುರಖಿಲಕಲಾಮೂರ್ತಿಮುದ್ವೇಲಕೀರ್ತಿಃ
ಧೀರಶ್ರೀರಾಘವೇಂದ್ರಸ್ಸದಿಶತು ಸತತಂ ಭವ್ಯಮವ್ಯಾಹತಂ ನಃ ॥ ೧೦ ॥

ಯೇ ರಾಮವ್ಯಾಸಪಾದಪ್ರಣಿಹಿತಮನಸೋ ಮಧ್ವತಂತ್ರಪ್ರತಿಷ್ಠಾ-
ಧುರ್ಯಾ ಮರ್ಯಾದಸಂವಿತ್ಸುಮಹಿತಸುಮತೀಂದ್ರಾರ್ಯಶಿಷ್ಯಾಗ್ರಗಣ್ಯಾಃ ।
ನಿತ್ಯತ್ರಯ್ಯಂತಚಿಂತಾಪರಿಣತವಿಶದಾಶೇಷತತ್ತ್ವಾವಬೋಧ-
ಪ್ರಖ್ಯಾತಾನ್ ತಾನುಪೇಂದ್ರವ್ರತಿವಿಬುಧಮಣೀನ್ ದೇಶಿಕಾನಾಶ್ರಯೇಽಹಮ್ ॥೧೧॥

ಯೋಗೋ ಯಃ ಕರ್ಮನಾಮಾ ಕವಿಭಿರಭಿಹಿತೋ ಯಶ್ಚ ವಿಜ್ಞಾನಸಂಜ್ಞಃ
ಶಕ್ತೋ ನಾಸಿದ್ಧಕಾಯಸ್ತನುಮತಿರನಯೋಸ್ತಾವದಾವರ್ಜನೇಽಹಮ್ ।
ಯಶ್ಚೋಪಾಯೈರುಪೇಯಃ ಸ್ಥಿರಫಲವಿಧಯೇ ದೈಶಿಕಸ್ಯ ಪ್ರಸಾದಃ
ತಸ್ಮೈ ತಸ್ಯ ಸ್ತುವೀಯಾನಿಶಮಪಿ ಚರಿತಂ ರಾಘವೇಂದ್ರವ್ರತೀಂದೋಃ ॥ ೧೨ ॥

ಏಷ ಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರಚರಿತಾಂಭೋನಿಧಿಃ ಕ್ವಾತಿವೇಲಃ
ಕ್ವಾಸೌ ಖದ್ಯೋತಪೋತಪ್ರಮುಷಿತವಿಭವಶ್ಚೇತಸೋ ನಃ ಪ್ರಕಾಶಃ ।
ವಂಧ್ಯೈವಾತಃ ಪ್ರತಿಜ್ಞಾ ತದತುಲನಿಖಿಲಾಶ್ಚರ್ಯಚರ್ಯಾಭಿಧಾನೇ
ಸ್ಥಾನೇಥಾಪಿ ಕ್ವಚಿತ್ಸ್ಯಾದಿಹ ಪುನರುದಧಿಸ್ನಾನಸಂಕಲ್ಪವತ್ಸಾ ॥ ೧೩ ॥

ಯದ್ಭಾನೌ ಯತ್ಕೃಶಾನೌ ಯದಮೃತಕಿರಣೇ ಯದ್ಗ್ರಹೇಷೂದಿತೇಷು
ಜ್ಯೋತಿರ್ಯತ್ತಾರಕಾಸು ಪ್ರಥಿತಮಣಿಷು ಯದ್ಯಚ್ಚ ಸೌದಾಮಿನೀಷು ।
ಸಂಭೂಯೈತತ್ಸಮಸ್ತಂ ತ್ವದಮಿತಹೃದಯಾಕಾಶನಿರ್ಯತ್ಪ್ರಕಾಶೇ
ಧೀರಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರ ಭಜತೇ ಹಂತ ಖದ್ಯೋತರೀತಿಮ್ ॥೧೪॥

ಚಿತ್ತೇನಾಯುಕ್ತಮರ್ಥಂ ಕಲಯತಿ ಸಹಸಾ ನಾಭಿಧತ್ತೇ ನ ಸದ್ಭಿ-
ಸ್ಸಾಕಂ ಮೀಮಾಂಸತೇ ವಾ ನ ಲಿಖಿತಿ ವಚಸೋದ್ಘಾಟಯತ್ಯಾಶಯಂ ಸ್ವಮ್ ।
ಉಕ್ತಂ ನೋ ವಕ್ತಿ ಭೂಯಃ ಕ್ವಚಿದಪಿ ಲಿಖಿತಂ ನೈವ ನಿರ್ಮಾರ್ಷ್ಟಿ ತಸ್ಮಾ-
ದಸ್ಮಾಭಿಸ್ಸತ್ಪ್ರಬಂಧಪ್ರಣಯನವಿಷಯೇ ಸ್ತೂಯತೇ ರಾಘವೇಂದ್ರಃ ॥೧೫॥

ಧೀರಶ್ರೀರಾಘವೇಂದ್ರಂ ಕೃತನಿಜವಿಜಯಸ್ರಗ್ಧರಾರ್ಥಪ್ರಕಾಶಂ
ದೃಷ್ಟ್ವಾ ಸಂತುಷ್ಟಚೇತಾಃ ದಶಮತಿರಚಿರಾದಭ್ಯಷಿಂಚತ್ಪದೇ ಸ್ವೇ ।
ನೂನಂ ವಾಣೀ ತದೀಯಾನನನಲಿನಗತಾ ತತ್ಪ್ರತಸ್ವಪ್ರಿಯೈಕ-
ಪ್ರತ್ಯಾಸಂಗಪ್ರಹೃಷ್ಟಾ ಸ್ವಯಮಪಿ ತದನು ಸ್ವೇ ಪದೇ ಚಾಭ್ಯಷಿಂಚತ್ ॥೧೬॥

ಗ್ರಂಥೋ ವಾದಾವಲೀ(ಲಿಃ) ದ್ರಾಗಭಜತ ವಿದಿತೋ ದುರ್ಮತಾರಣ್ಯದಾಹಾ-
ದಾಪೂರ್ವಾರ್ಧಪ್ರತೀಪಕ್ರಮಪರಿಪಠಿತಸ್ವಾಭಿಧಾಗೋಚರತ್ವಮ್ ।
ತಸ್ಯ ಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರ ಭವತೋ ವಾಯುವಂಶಪ್ರಸೂತೇ-
ರೇತಹ್ಯರ್ದ್ದೀಪನಂ ಯತ್ತದುಚಿತಮಿತಿ ಮೇ ಮಾನಸೀವೃತ್ತಿರಿಂಧೇ ॥ ೧೭ ॥

ವಂದಾರುಪ್ರಾಣಿಚೇತಶ್ಶ್ರಿತತಿಮಿರಪರೀಭಾವಕೌಶಲ್ಯಭಾಜಃ
ತೇಜಸ್ತೇ ರಾಘವೇಂದ್ರ ವ್ರತಿವರ ಕಿಮಿತಿ ಶ್ರೀಮತೋ ವರ್ಣಯಾಮಃ ।
ಯೇನೈಷಾ ಚಂದ್ರಿಕಾऽಪಿ ತ್ರಿಭುವನವಿಶದಾ ಸತ್ಪಥೋದಂಚಿತಶ್ರೀಃ
ಲೇಭೇ ಸರ್ವಜ್ಞಮೌಲಿಪ್ರಕಟಿತವಿಭವಾ ತ್ವತ್ತ ಏವ ಪ್ರಕಾಶಮ್ ॥ ೧೮ ॥

ಧೀರಶ್ರೀರಾಘವೇಂದ್ರ ತ್ವದತುಲರಸನಾರಂಗನೃತ್ಯತ್ಸ್ವಯಂಭೂ-
ಯೋಷಾಧಮ್ಮಿಲ್ಲಭಾರಶ್ಲಥಕುಸುಮತತೀಸ್ತ್ವದ್ಗಿರಸ್ಸಂಗಿರಾಮಃ ।
ಯಾಭಿಸ್ಸಂಮಿಶ್ರಿತಾಭಿರ್ನಿರವಧಿವಸುಧಾ ವಿಶ್ರುತಾ ಸಾ ಸುಧಾಪಿ
ಕ್ಷೋಣೀಗೀರ್ವಾಣಗಮ್ಯಂ ಪರಿಮಲಮತುಲಂ ಸಾಂಪ್ರತಂ ಸಂಪ್ರಪೇದೇ ॥೧೯॥

ಪ್ರಾಯಃ ಪ್ರಾಗನ್ಯದೀಯಾತನುತರವಿವೃತಿಗ್ರಂಥವಾಸೋವಿಹೀನಾ
ಹ್ರೀಣಾ ನಾದರ್ಶಿ ಧೀರೈರಪಿ ಕಿಲ ಯುವತಿರ್ಭಾಷ್ಯಟೀಕಾಭಿಧಾನಾ ।
ಅದ್ಯ ಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿಕೃತವಿವೃತಿಪ್ರೌಢಕೌಶೇಯರತ್ನಂ (ವಾಸಃ)
ಸ್ನೇಹಾಯುಕ್ತಂ ವಸಾನಾ ವಿಹರತಿ ಸುಧಿಯಾಮಗ್ರತಃ ಸ್ವೈರಿಣೀವ ॥ ೨೦ ॥

ಗ್ರಂಥೋಽಯಂ ನ್ಯಾಯಮುಕ್ತಾವಲಿರಿತಿ ಭವತಾ ರಾಘವೇಂದ್ರ ಪ್ರಣೀತೋ
ನೂನಂ ಮುಕ್ತಾವಲಿರ್ಯತ್ಪ್ರಥಮಮುಪಚಿತಾದುದ್ಧೃತಸ್ತಂತ್ರಸಿಂಧೋಃ ।
ಪ್ರೋತಶ್ಚ ಧ್ಯಾನತಂತೌ ತದನು ತವ ಗುಣಪ್ರೌಢಿಮಾಂಶಂಸತಾಂ ನಃ
ಕಂಠೇಷು ಪ್ರೇಮಭೂಮ್ನಾ ಬಹುಮತಿವಿಧಯೇ ವಾಧುನಾ ಸನ್ಯಧಾಯಿ ॥೨೧॥

ಹಂತಾನಂತೋಽಣುಭಾಷ್ಯೇ ವಿಲಸತಿ ಭಗವತ್ಪಾದಸಂವರ್ಣಿತೋಽರ್ಥಃ
ಸತ್ಯಂ ಪ್ರತ್ಯೇತು ಲೋಕಃ ಕಥಮಿದಮಧುನಾ ತಸ್ಯ ಟೀಕಾಂ ವಿನಾ ತೇ ।
ಧೀರಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರ ನಿವಸದ್ವಿಶ್ವಮಾಸ್ಯಾಂತರಾಲೇ
ಸ್ತೋಕೇ ತೋಕಸ್ಯ ಶೌರೇರತಿಭೃಶಕುಪಿತಾಂ ತತ್ಪ್ರಸೂಮಂತರೇವ ॥ ೨೨ ॥

ಭಿನ್ನೈರರ್ಥೈರನೇಕಪ್ರಕರಣಭಣಿತೈರದ್ಯ ಮಧ್ವಾಗಮಾಬ್ಧೌ
ಮತ್ವಾ ಭೂಯೋ ವಿಚಿಂತ್ಯ ಶ್ರುತಿಪರಿಣತಯಾ ಶಕ್ತ್ಯಯಾ ಸಂಗೃಹೀತೈಃ ।
ಸೂತ್ರೇಷ್ವೇಕೈಕಶೋಽಪಿ ವ್ರತಿವರ ಭವತಾ ಯೋಜಿತೇಷು ಪ್ರವಾಚಾಂ
ಮೋದೋ ಯಾದೃಙ್ನ ತಾದೃಕ್ ತವ ಪುನರಿತರೈಃ ರಾಘವೇಂದ್ರ ಪ್ರಬಂಧೈಃ ॥೨೩॥

ಧೀರ ಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರ ಸುಜನಾನುಗ್ರಹವ್ಯಗ್ರಚಿತ್ತೈ-
ರಾಚಾರ್ಯೈಸ್ಸಂಗೃಹೀತಾಃ ಕತಿಚನ ಮನವಸ್ಸಾರಭೂತಾಶ್ರುತಿಭ್ಯಃ ।
ತಾನೇವೋದ್ಧೃತ್ಯ ಭೂಯಃ ಶ್ರುತಿಷು ನಿದಧತಾ ಶಿಷ್ಯವರ್ಗೋಪಕ್ಲೃಪ್ತ್ಯೈ
ಲೋಕೇ ಸಾಧು ವ್ಯಧಾಯಿ ಶ್ರುತಗುಣ ಭವತಾಚಾರ್ಯಚರ್ಯಾನು ವೃತ್ತಿಃ ॥೨೪॥

ಗೀತಾಮತ್ಯರ್ಥಧೂತಶ್ರಿತಜನದುರಿತಾಮಿಂದುವಂಶಪ್ರಸೂತೌ
ವ್ಯಾಚಕ್ಷಾಣೇ ಮುರದ್ವಿಷ್ಯಭಿಜನಮಭಜದ್ಭದ್ರಮಿಂದೋರನಿದ್ರಮ್ ।
ಧೀರಶ್ರೀರಾಘವೇಂದ್ರ ! ತ್ವಯಿ ಪುನರನಘೇ ಹಂಸವಂಶೋದಿತೇ ತಾಂ
ವ್ಯಾಕುರ್ವತ್ಯದ್ಯ ಭವ್ಯಂ ಕಥಮಿವ ನ ಭಜೇದಾಶು ಮಿತ್ರಾನ್ವವಾಯಃ ॥ ೨೫ ॥

ನ ಸ್ಯಾದೀಶಪ್ರಸಾದೋ ಗುರುವರ(ಪದ)ಕರುಣಾಮಂತರೇಣೇತಿ ರೂಢೋ
ಧೀರಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರ ಸುದೃಢಶ್ಚೇತಸಸ್ತೇ ವಿಪಾಕಃ ।
ಯೇನ ವ್ಯಾಖ್ಯಾಯ ಗೀತಾಮಪಿ ಗುರುಚರಣೋದಾರತದ್ಭಾಷ್ಯಟೀಕಾ-
ವ್ಯಾಖ್ಯಾ ವಿಖ್ಯಾತವಿದ್ವನ್ಮಣಿಗಣವಿನುತಾಽಕಾರಿ ಭೂಯಸ್ತ್ವಯೈವ ॥ ೨೬ ॥

ನಾನಾತಂತ್ರಪ್ರಸಂಗತ್ರಿಭುವನವಿದಿತೋದಾರಸಾರಸ್ವತೋಽಪಿ
ಪ್ರತ್ನಾನೇಕಪ್ರಬಂಧಪ್ರವಚನರಚನಾವಿತ್ತತತ್ಕೌಶಲೋಽಪಿ ।
ಶಶ್ವದ್ವ್ಯಾಖ್ಯಾತಗೀತಾಕೃತಿರಪಿ ವಿಬುಧಾನುಗ್ರಹೈಕಾಗ್ರಚಿತ್ತೋ
ಗೀತಾತಾತ್ಪರ್ಯಟೀಕಾವಿವರಣಮಕರೋದದ್ಭುತಂ ರಾಘವೇಂದ್ರಃ ॥ ೨೭ ॥

ಲಕ್ಷ್ಮೀನಾರಾಯಣಾರ್ಯಸ್ತವ ತನಯಮಣಿಃ ಸತ್ಸು ಸರ್ವೇಷು ಧನ್ಯೋ
ಯಸ್ಮಾದ್ಯಗ್ಭಾಷ್ಯಟೀಕಾತನುತರವಿವೃತೇರಂಜಸಾ ತತ್ಕೃತಾಯಾಃ ।
ಪ್ರೇಮ್ಣಾ ವಿದ್ವತ್ಸು ಭೂಯಃ ಪ್ರಚಯಮಭಿಲಷನ್ ರಾಘವೇಂದ್ರವ್ರತೀಂದ್ರ
ಪ್ರಾವೋಚಸ್ತ್ವಂ ಪ್ರತೀತವ್ರತ ನಿಚಯಮೃಚಾಮೇವ ಭಾಷ್ಯಾನುರೋಧಾತ್ ॥೨೮॥

ಹೃದ್ಯತ್ರಯ್ಯಂತವಿದ್ಯಾಮುಖನಿಖಿಲಕಲಾತತ್ತ್ವಬೋಧೈಕಮೂರ್ತೇ
ಧೀರಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವರ ಸಕಲಾನ್ಯೇವ ಸೂಕ್ತಾನಿ ಸಮ್ಯಕ್ ।
ವ್ಯಾಕುರ್ವಾಣಂ ಭವಂತಂ ವ್ಯವಸಿತಮತಯೋ ಹಂತ ನಿಧ್ಯಾಸಯಂತಃ
ಸರ್ವೇ ಭೂಯಸ್ಸ್ಮರಂತಿ ವ್ರತಿಸಮಿ(ಸುಮ)ತಿಮಣೇಃ ಬ್ರಹ್ಮಸೂತ್ರಪ್ರಣೇತುಃ ॥೨೯॥

ಯಾವದ್ವೇದಾಂತಖಂಡಪ್ರವಚನಕೃತಿನಿ ಪ್ರೇಮಭೂಮಾ ನ ತಾದೃಕ್
ಸರ್ವಾಮ್ನಾಯಪ್ರವಕ್ತರ್ಯನುಪಮಚರಿತೇ ರಾಘವೇಂದ್ರವ್ರತೀಂದ್ರೇ ।
ಇತ್ಯೇತದ್ದೇಹಭಾಜಾಮತಿವಿಶದರುಚೌ ಜಾಗರೂಕೇಽಪಿ ಲೋಕೇ
ರಾಕಾಚಂದ್ರೇ ದ್ವಿತೀಯಾಶಶಿಶಕಲನತಿನ್ಯಾಯಮೇವಾನುರುಂಧೇ ॥ ೩೦ ॥

ಹೃದ್ಯಾ ಟೀಕಾನವದ್ಯಾ ಪರವಿವೃತಯಜುಸ್ಸಾಮಸಂಬಂಧಿನೀ ತೇ
ಮಾಲಿನ್ಯಕ್ಷಾಲನಾಂಭಸ್ತ್ವಯಮಜನಿ ಹರೇರುತ್ತರಾಂಗೇ ಚ ಮೂರ್ಧ್ನಿ ।
ಸೈವರ್ಚಾಂ ರಾಘವೇಂದ್ರವ್ರತಿಸುಮತಿಮಣೇಽನನ್ಯಸಂಪರ್ಕಭಾಜಾ-
ಮೋಜಿಷ್ಠೇ ದಕ್ಷಿಣಾಂಗೇ ಮೃಗಮದಮಿಲಿತೋದಾರಪಾಟೀರಸಾರಃ ॥ ೩೧ ॥

ನೂನಂ ವಾಕ್ಯಾನುರೋಧಿ ಪ್ರಕರಣಮಖಿಲಂ ನೇಯಮಿತ್ಯುಕ್ತಮುಚ್ಚೈಃ
ಪ್ರಾಚಾ ವಾಚಂಯಮೇನ ಪ್ರಕಟಿತವಿಭವಾನಂತವೇದಾಂತವಾಚಾ ।
ಸ್ವಾಮಿನ್ನೇತತ್ಪ್ರತೀಯುಃ ಕಥಮಿವ ಕವಯೋ ರಾಘವೇಂದ್ರ ವ್ರತೀಂದೋ
ಯೇನ ತ್ವದ್ವಾಕ್ಯಜಾತಂ ಪ್ರಕರಣನಿಕರಂ(ಮಖಿಲಂ)ತಾವದದ್ಯಾನುರುಂಧೇ ॥೩೨॥

ವಿಖ್ಯಾತಶ್ರೀಸುಧೀಂದ್ರವ್ರತಿಸುತ ಭವತಾ ಸಾಧುಗೀತೇ ಸುತರ್ಕೇ
ಸದ್ಯಃ ಪ್ರತ್ಯರ್ಥಿಹೃದ್ಯೇ ಮುನಿಮಣಿರಚಿತೇ ತಾಂಡವೇ ಯೋಜಿತಾರ್ಥೇ ।
ಪ್ರತ್ಯಾಖ್ಯಾತಪ್ರಕಾಶಸ್ಸಮಜನಿ ಭುವನೇ ಹಂತ ಚಿಂತಾಮಣಿಸ್ತ್ವಂ
ಬ್ರೂಹಿ ಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿವಿಬುಧಮಣೇ ಕಸ್ತ್ವದನ್ಯೋ ವದಾನ್ಯಃ ॥೩೩॥

ಪ್ರೌಢಾನೇಕಪ್ರಬಂಧಪ್ರವಚನರಚನಾಲಬ್ಧವಿಸ್ರಬ್ಧಕೀರ್ತೇ-
ಸ್ತೇ ಕಿಂ ನ್ಯಾಯಾಮೃತಸ್ಯಾವಿವರಣವಿಧಿನಾ ರಾಘವೇಂದ್ರಾಯಶಸ್ಸ್ಯಾತ್ ।
ಯದ್ರಾಜ್ಯಪ್ರಚ್ಯವೇನಾಖಿಲಭುವನಪತೇಃ ರಾಘವಸ್ಯೇವ ಕೀರ್ತಿಃ
ಲಬ್ಧೈವ ಪ್ರತ್ಯುತಾಲಂ ಗುರುಚರಣಕೃತಾಮೋದನಿರ್ವಾಹಜನ್ಯಾ ॥ ೩೪ ॥

ವಾಚಾ ಸಂಕ್ಷಿಪ್ತಯಾ ಯದ್ಬಹುಚರಿತಮುಪಾವರ್ಣಯಸ್ತ್ವಂ ಮುರಾರೇಃ
ಕಿಂಚ ಶ್ರೀರಾಘವೇಂದ್ರವ್ರತಿಪ ರಘುಪತೇಸ್ತೇನ ನೋ ವಿಸ್ಮಯೋಽಹಮ್ ।
ಕಿಂ ವಾ ದುಸ್ಸಾಧ್ಯಮಸ್ತಿ ತ್ರಿಜಗತಿ ಮಹತಾಮಾತ್ಮನಃ ಪಾಣಿಪದ್ಮೇ
ಪಶ್ಯಾಮಂದೋಮರಂದಃ ಕಿಲ ಘಟಜನುಷಾ ಚೋಲಿರಾಕಾರಿ ಸಿಂಧುಃ ॥ ३४ ॥

ತಂತ್ರಶ್ರೀನೀಲಕಂಠಾಭಿಧಮಖಿಮಣಿನಾ ಭಟ್ಟತಂತ್ರಾನುಬಂಧೇ
ಗ್ರಂಥೇ ತಾವತ್ತ್ವದೀಯೇ ಕರಿಣಿ ಗುಣವಿದಾಽಽರೋಪಿತೇಽಭ್ಯರ್ಹಣಾಯ (ಯ್ಯೈ) ।
ಕೀರ್ತಿಸ್ತೇ ರಾಘವೇಂದ್ರ ವ್ರತಿಸುಮತಿಮಣೇ ನೂನಮನ್ಯೂನವೇಗಾ-
ದ್ದಿಙ್ನಾಗಾನಾರುರುಕ್ಷುಃ ಸ್ವಯಮಪಿ ಸಹಸಾ ಧಾವದಷ್ಟೌ ದಿಗಂತಾನ್ ॥३५॥

ವ್ಯಾಸೇನ ವ್ಯುಪ್ತಬೀಜಃ ಶ್ರುತಿಭುವಿ ಭಗವತ್ಪಾದಲಬ್ಧಾಂಕುರಶ್ರೀಃ
ಪ್ರತ್ನೈರೀಷತ್ಪ್ರಭಿನ್ನೋಽಜನಿ ಜಯಮುನಿನಾ ಸಮ್ಯಗುದ್ಭಿನ್ನಶಾಖಃ ।
ಮೌನೀಶವ್ಯಾಸರಾಜಾದುದಿತಕಿಸಲಯಃ ಪುಷ್ಪಿತೋಽಯಂ ಜಯೀಂದ್ರಾತ್
ಅದ್ಯ ಶ್ರೀರಾಘವೇಂದ್ರಾದ್ವಿಲಸತಿ ಫಲಿತೋ ಮಧ್ವಸಿದ್ಧಾಂತಶಾಖೀ ॥ ३೬ ॥

ಇತಿ ಶ್ರೀರಾಘವೇಂದ್ರಾರ್ಯೋಭಯವಂಶಾಬ್ಧಿಚಂದ್ರಮಾಃ ।
ಉಪೇಂದ್ರಸೂನುರ್ವಾದೀಂದ್ರಶ್ಚಕ್ರೇ ಗುರುಗುಣಸ್ತವಮ್ ॥

ಮಾಧ್ಯದದ್ವೈತವಿದ್ಯಾವದ್ಗರ್ವನಿರ್ವಾಪಣಕ್ಷಮಃ ।
ವಾದೀಂದ್ರಯತಿರಾಟ್ ತೇನೇ ಭಕ್ತ್ಯಾ ಗುರುಗುಣಸ್ತವಮ್ ॥

॥ ಇತಿ ಶ್ರೀಮದ್ವಾದೀಂದ್ರತೀರ್ಥ ವಿರಚಿತಂ ಗುರುಗುಣಸ್ತವನಂ ಸಂಪೂರ್ಣಂ ॥

॥ ಶ್ರೀಕೃಷ್ಣಾರ್ಪಣಮಸ್ತು ॥

|| ಶ್ರೀಃ ||

ಶ್ರೀಮದ್ವಾದೀಂದ್ರತೀರ್ಥ ವಿರಚಿತಂ

# ಗುರುಗುಣಸ್ತವನಂ

೧. ಅವತಾರಿಕಾ : ಶ್ರೀವಾದೀಂದ್ರತೀರ್ಥರು ತಾವು ಮಾಡಬಯಸಿದ 'ಗುರುಗುಣ-ಸ್ತವ'ರೂಪ ಗ್ರಂಥವು ನಿರ್ವಿಘ್ನವಾಗಿ ಪರಿಸಮಾಪ್ತಿಯಾಗಲೆಂದು ಬಯಸಿ ಇಷ್ಟದೇವತಾ ಪ್ರಾರ್ಥನಾ ರೂಪವಾದ ಮಂಗಳವನ್ನು ಮೊದಲಿನ ಶ್ಲೋಕದಲ್ಲಿ ಮಾಡುತ್ತಾರೆ.

ಉನ್ಮೀಲನ್ನೀಲನೀರೇರುಹನಿವಹಮಹಃಪುಷ್ಟಿಮುಷ್ಟಿಂಧಯಿಶ್ರೀಃ
ಶ್ರೀಭೂದುರ್ಗಾದೃಗಂತಪ್ರಚಯಪರಿಚಯೋದಾರಕಿರ್ಮೀರಭಾವಃ ।
ಸ್ವೈರಕ್ಷೀರೋದನಿರ್ಯಚ್ಛಶಿರುಚಿನಿಚಯಾಽಖರ್ವಗರ್ವಾಪನೋದೀ
ಪಾತು ಶ್ರೀನೇತುರಸ್ಮಾನ್ ಸಪದಿ ಬುಧಜನತ್ರಾಣದಕ್ಷಃ ಕಟಾಕ್ಷಃ || ೧ ||

ಅನ್ವಯಾರ್ಥ : ಉನ್ಮೀಲನ್ನೀಲನೀರೇರುಹನಿವಹಮಹಃಪುಷ್ಟಿಮುಷ್ಟಿಂಧಯಿಶ್ರೀಃ – ಉನ್ಮೀಲತ್ = ಅರಳುತ್ತಿರುವ, ನೀಲನೀರೇರುಹ = ನೀಲಕಮಲಗಳ, ನಿವಹ = ಸಮೂಹದ, ಮಹಃಪುಷ್ಟಿ = ತೇಜೋಭಿವೃದ್ಧಿಯನ್ನು (ಕಾಂತಿಸಮೃದ್ಧಿಯನ್ನು), ಮುಷ್ಟಿಂಧಯಿ = ತಿರಸ್ಕರಿಸುವಂಥ, ಶ್ರೀಃ = ಕಾಂತಿಯುಳ್ಳ (ಶ್ರೀಪತಿಯ ಕಟಾಕ್ಷವು), ಶ್ರೀಭೂದುರ್ಗಾದೃಗಂತಪ್ರಚಯಪರಿಚಯೋದಾರಕಿರ್ಮೀರಭಾವಃ – ಶ್ರೀ = ಶ್ರೀದೇವಿ, ಭೂ = ಭೂದೇವಿ ಮತ್ತು ದುರ್ಗಾ = ದುರ್ಗಾದೇವಿ ಇವರುಗಳ, ದೃಗಂತ = ಕಡೆಗಣ್ಣಿನ ನೋಟದ, ಪ್ರಚಯಪರಿಚಯ = ಅಧಿಕಸಹವಾಸದಿಂದ, ಉದಾರ = ಉತ್ಕೃಷ್ಟವಾದ, ಕಿರ್ಮೀರಭಾವಃ = ಚಿತ್ರವಿಚಿತ್ರವಾದ ವರ್ಣವುಳ್ಳ (ಶ್ರೀಪತಿಯ ಕಟಾಕ್ಷವು), ಸ್ವೈರಕ್ಷೀರೋದನಿರ್ಯತ್‌ಶಶಿರುಚಿನಿಚಯಾಖರ್ವಗರ್ವಾಪನೋದೀ – ಕ್ಷೀರೋದ = ಕ್ಷೀರಸಮುದ್ರದಿಂದ, ನಿರ್ಯತ್ = ಉದಯಿಸಿ ಮೇಲೆದ್ದು ಬರುತ್ತಿರುವ, ಶಶಿರುಚಿ-ನಿಚಯ = ಪೂರ್ಣಚಂದ್ರನ ಕಾಂತಿಯ ಸಮೂಹದ, ಅಖರ್ವ = ಬಹಳವಾದ, ಗರ್ವ = ಗರ್ವವನ್ನು, ಸ್ವೈರ = ಸ್ವಚ್ಛಂದವಾಗಿ ಅಥವಾ ಸ್ವತಂತ್ರವಾಗಿ, ಅಪನೋದೀ = ನಿರಾಕರಿಸುವ (ಶ್ರೀಪತಿಯ ಕಟಾಕ್ಷ), ಬುಧಜನತ್ರಾಣದಕ್ಷಃ – ಬುಧಜನ = ಜ್ಞಾನಿಗಳ (ಸುರ ಹಾಗೂ ಭೂಸುರರ), ತ್ರಾಣ = ರಕ್ಷಣೆಯಲ್ಲಿ, ದಕ್ಷಃ = ಸಮರ್ಥವಾದ (ಶ್ರೀಪತಿಯ ಕಟಾಕ್ಷವು), ಶ್ರೀನೇತುಃ = ಲಕ್ಷ್ಮೀಪತಿಯ, ಕಟಾಕ್ಷಃ = ಕಟಾಕ್ಷವು, ಅಸ್ಮಾನ್ = ನಮ್ಮನ್ನು, ಸಪದಿ = ಕೂಡಲೇ (ತಡ ಮಾಡದೇ), ಪಾತು = ಕಾಪಾಡಲಿ.

**ತಾತ್ಪರ್ಯಾರ್ಥ** : ಅರಳುತ್ತಿರುವ ನೀಲಕಮಲಸಮೂಹಗಳ ಕಾಂತಿಯನ್ನು ಹೀರಿಬಿಡಲು ಸಮರ್ಥವಾದ ಕಾಂತಿಯಿಂದ ಕೂಡಿದ; ಶ್ರೀದೇವಿ, ಭೂದೇವಿ ಮತ್ತು ದುರ್ಗಾದೇವಿಯರ ಕಡೆಗಣ್ಣನೋಟದ ಅಧಿಕ ಸಹವಾಸದಿಂದ ಶ್ರೇಷ್ಠವಾದ ಚಿತ್ರವಿಚಿತ್ರ ವರ್ಣೋಪೇತವಾದ, ಕ್ಷೀರಸಾಗರದಿಂದ ಹೊರಹೊಮ್ಮುತ್ತಿರುವ ಪೂರ್ಣಚಂದ್ರನ ಕಾಂತಿ ಸಮೂಹದ ಅತ್ಯಹಂಕಾರವನ್ನು ಪರಿಹರಿಸಲು ಸಮರ್ಥವಾದ ಮತ್ತು ಸುರ ಹಾಗೂ ಭೂಸುರರನ್ನು ರಕ್ಷಿಸುವಲ್ಲಿ ಅತ್ಯಂತ ದಕ್ಷವಾದ ಶ್ರೀಪತಿಯ ಕಟಾಕ್ಷವು ನಮ್ಮನ್ನು ಕೂಡಲೇ ಕಾಪಾಡಲಿ.

**ಗುಣಪ್ರಕಾಶ** : ಗ್ರಂಥಾರಂಭದಲ್ಲಿ ಸಪ್ತಮೂಲ ಗುರುಗಳಲ್ಲಿ ಶ್ರೇಷ್ಠನಾದ, ಸರ್ವೋತ್ತಮನಾದ ಮತ್ತು ಇಷ್ಟದೇವತೆಯಾದ ಶ್ರೀಪತಿನಾರಾಯಣನ ಕಟಾಕ್ಷದ ವರ್ಣನೆ ಮಾಡುವ ಮೂಲಕ ನಾರಾಯಣನನ್ನೇ ಸ್ತುತಿಸಲಾಗಿದೆ. ಸ್ವಗತಭೇದವಿವರ್ಜಿತಾತ್ಮನಾದ ನಾರಾಯಣನ ಕಟಾಕ್ಷವು ಅಗಮ್ಯವೂ, ಅಚಿಂತ್ಯವೂ, ಅನುಪಮವೂ ಆಗಿದ್ದರೂ ನಮ್ಮ ಸ್ತವನಕ್ಕೆ ಗಮ್ಯವಾಗಿರುವಂತೆ ಸ್ತುತಿಸಿದ್ದು ಕಂಡುಬರುತ್ತದೆ.

ಶ್ರೀಮನ್ನಾರಾಯಣನು ಅಪಾರವಾದ ತೇಜೋರೂಪನು. ಬುಧಜನತ್ರಾಣದಕ್ಷಃ ಎಂದು ಹೇಳುವುದರಿಂದ ನಾರಾಯಣನು ಶಿಷ್ಟಜನರಕ್ಷಕನೆಂದು ಸ್ತುತಿಸಲಾಗಿದೆ. **"ಸ್ವೈರಕ್ಷೀರೋದನಿರ್ಯಚ್ಛಶಿರುಚಿನಿಚಯಾಽಖರ್ಗಗರ್ವಾಪನೋದೀ"** ಎಂಬ ವಿಶೇಷಣದಿಂದ ಶ್ರೀಹರಿಯು ಕ್ಷೀರಸಮುದ್ರದಿಂದ ಹೊರಹೊಮ್ಮುತ್ತಿರುವ ಚಂದ್ರನ ಕಾಂತಿಸಮೂಹದ ಅತ್ಯಹಂಕಾರವನ್ನು ಸ್ವಚ್ಛಂದವಾಗಿ ಪರಿಹರಿಸುವ ಸ್ವಭಾವವುಳ್ಳವನು ಎಂದು ವರ್ಣಿಸುವಾಗ ನಾರಾಯಣನು ಅಮಿತಕಾಂತಿಸ್ವರೂಪನೆಂದು ತಿಳಿಸಲಾಗಿದೆ. ಇದಲ್ಲದೇ **'ಗರ್ವಾಪನೋದೀ'** ಅನ್ನುವದರಿಂದ ಮದೋನ್ಮತ್ತರಾದ ದುಷ್ಟರನ್ನು ಶಿಕ್ಷಿಸುವವನು ಎಂಬ ಸೂಚನೆಯೂ ಕಂಡು ಬರುತ್ತದೆ. ಒಟ್ಟಿನಲ್ಲಿ **'ಪರಿತ್ರಾಣಾಯ ಸಾಧೂನಾಂ ವಿನಾಶಾಯ ಚ ದುಷ್ಕೃತಾಮ್ । ಧರ್ಮಸಂಸ್ಥಾಪನಾರ್ಥಾಯ ಸಂಭವಾಮಿ ಯುಗೇ ಯುಗೇ ॥'** ಎಂದು ಹೇಳಿದಂತೆ ಶ್ರೀನಾರಾಯಣನ ಅವತಾರಕಾರ್ಯದ ಪ್ರಯೋಜನವನ್ನು ಈ ಶ್ಲೋಕದಲ್ಲಿ ಗುರುತಿಸಬಹುದು.

**ಯಂ ಕಾಮಯೇ ತಂ ತಮುಗ್ರಂ ಕೃಣೋಮಿ ತಂ ಬ್ರಹ್ಮಾಣಂ ತಂ ಋಷಿಂ ತಂ ಸುಮೇಧಾಮ್** ಎಂದು ಹೇಳುವ ಶ್ರೀಲಕ್ಷ್ಮೀದೇವಿಗೇ ನಿಯಾಮಕನಾಗಿರುವದನ್ನು **'ಶ್ರೀಸೇತುಃ'** ಎಂಬ ಪದದಿಂದ ತಿಳಿಸಿ ಆ ಮೂಲಕ ನಾರಾಯಣನ ಚರಾಚರಪ್ರಪಂಚದ ನಿಯಾಮಕತ್ವಗುಣವನ್ನು ಸ್ತುತಿಸಲಾಗಿದೆ. **'ಪಾತು'** ಎನ್ನುವುದರಿಂದ ಶ್ರೀಪತಿಯ ಪಾಲಕತ್ವಗುಣವು ಹೇಳಲ್ಪಟ್ಟಿದೆ.

**೨. ಅವತಾರಿಕಾ** : ಸಕಲ ವಾಙ್ಮನೋನಿಯಾಮಕಳೂ ಗ್ರಂಥಾಭಿಮಾನಿನಿಯೂ ಆದ ಶ್ರೀಭೂದುರ್ಗಾತ್ಮಕಳಾದ ಲಕ್ಷ್ಮೀದೇವಿಯನ್ನು ಸ್ತುತಿಸುತ್ತಾರೆ.

**ಮಾತಸ್ತ್ವಾಮುಪಕಲ್ಪಿತಾಖಿಲಜಗತ್ಸರ್ಗೇಽಜಭರ್ಗೇಡಿತೇ**
**ಚೇತೋ ನ ಪ್ರಜಹಾತು ಜಾತುಚಿದಿಹ ಸ್ವರ್ಗೇಽಪವರ್ಗೇಽಪಿ ನಃ ।**
**ಲಾವಣ್ಯಾದಧರೀಕೃತಾಮರವಧೂವರ್ಗೇ ನಿಸರ್ಗೇಹಿತಂ**
**ಕಾರುಣ್ಯಂ ಕುರು ಮಾಕೃಥಾ ಮಯಿ (ತ್ವಯಿ) ಪುನರ್ದುರ್ಗೇ ವಿಸರ್ಗೇ ಮತಿಮ್ ॥ ೨ ॥**

**ಅನ್ವಯಾರ್ಥ :** **ಉಪಕಲ್ಪಿತಾಖಿಲಜಗತ್ಸರ್ಗೇ** – **ಉಪಕಲ್ಪಿತ** = ಮಾಡಲ್ಪಟ್ಟ, **ಅಖಿಲಜಗತ್** = ಎಲ್ಲ ಪ್ರಪಂಚದ, **ಸರ್ಗೇ** = ಸೃಷ್ಟಿಯುಳ್ಳ ದುರ್ಗಾದೇವಿಯೇ ! ಅಂದರೆ ಬ್ರಹ್ಮಾದಿ ಸಕಲ ಪ್ರಪಂಚವನ್ನು ಸೃಷ್ಟಿಸಿದ (ದುರ್ಗಾದೇವಿಯೇ !), **ಅಜಭರ್ಗೇಡಿತೇ** – **ಅಜ** = ಬ್ರಹ್ಮದೇವ, **ಭರ್ಗ** = ರುದ್ರದೇವ ಇವರೆಲ್ಲರಿಂದ, **ಈಡಿತೇ** = ಸ್ತುತಿಸಲ್ಪಡುವ (ದುರ್ಗಾದೇವಿಯೇ !), **ಲಾವಣ್ಯಾತ್** = ಸ್ವೀಯ ಸೌಂದರ್ಯದಿಂದ, **ಅಧರೀಕೃತಾಮರವಧೂವರ್ಗೇ** – **ಅಧರೀಕೃತ** = ತಿರಸ್ಕರಿಸಲ್ಪಟ್ಟ, **ಅಮರವಧೂವರ್ಗೇ** = ದೇವತಾಸ್ತ್ರೀಯರ ಸಮೂಹವುಳ್ಳವಳೇ ! ಅಂದರೆ ದೇವತಾಸ್ತ್ರೀಯರ ಸೌಂದರ್ಯಕ್ಕಿಂತಲೂ ಮಿಗಿಲಾದ ಸೌಂದರ್ಯವುಳ್ಳ (ದುರ್ಗಾದೇವಿಯೇ !), **ಮಾತಃ ದುರ್ಗೇ** = ತಾಯಿ ದುರ್ಗಾದೇವಿಯೇ ! **ಇಹ** = ಈ ಲೋಕದಲ್ಲಿ, **ಸ್ವರ್ಗೇ** = ಸ್ವರ್ಗಲೋಕದಲ್ಲಿ, **ಅಪವರ್ಗೇ ಅಪಿ** = ಅಥವಾ ಮೋಕ್ಷದಲ್ಲಿ ಎಲ್ಲಿದ್ದರೂ ಕೂಡ, **ನಃ** = ನಮ್ಮ, **ಚೇತಃ** = ಮನಸ್ಸು, **ತ್ವಾಂ** = ನಿನ್ನನ್ನು, **ಜಾತುಚಿತ್** = ಯಾವ ಕಾಲದಲ್ಲಿಯೂ, **ನ ಪ್ರಜಹಾತು** = ಅಗಲಿ ಹೋಗದಿರಲಿ ಮತ್ತು, **ಮಯಿ** = ನನ್ನಲ್ಲಿ, **ನಿಸರ್ಗೇಹಿತಂ** = ಸ್ವಭಾವಾಪೇಕ್ಷಿತವಾದ, **ಕಾರುಣ್ಯಂ** = ಕರುಣೆಯನ್ನು, **ಕುರು** = ಮಾಡು. ಅಥವಾ ನಮ್ಮ ಅಪೇಕ್ಷಿತವಾದುದನ್ನು ಕರುಣಿಸು. **ಪುನಃ** = ಅದರಂತೆಯೇ, **ಹೇ ದುರ್ಗೇ** = ಹೇ ದುರ್ಗಾದೇವಿಯೇ ! **ದುರ್ಗೇ** = ದಾರಿದ್ರ್ಯಯುಕ್ತವಾದ ಕಷ್ಟಕಾಲದಲ್ಲಿ, **ಮಯಿ ವಿಸರ್ಗೇ** = ನನ್ನನ್ನು ಪರಿತ್ಯಾಗ ಮಾಡುವ ವಿಷಯದಲ್ಲಿ, **ಮತಿಂ** = ಬುದ್ಧಿಯನ್ನು, **ಮಾ ಕೃಥಾಃ** = ಮಾಡಬೇಡ.

**ತಾತ್ಪರ್ಯಾರ್ಥ :** ಬ್ರಹ್ಮಾದಿ ಸಕಲ ಪ್ರಾಣಿಗಳನ್ನು ಸೃಷ್ಟಿಸುವ, ಬ್ರಹ್ಮರುದ್ರಾದಿಗಳಿಂದ **ಸ್ತುತಿಸಲ್ಪಡುವ**, ಸ್ವೀಯ ಸೌಂದರ್ಯದಿಂದ ದೇವತಾಸ್ತ್ರೀಸಮೂಹದ ಸೌಂದರ್ಯವನ್ನು ಕಡಿಮೆ ಮಾಡಿದ, ಶ್ರೀಭೂದುರ್ಗಾತ್ಮಕಳಾದ ಹೇ ಲೋಕಮಾತೆಯೇ ! ಈ ಲೋಕದಲ್ಲಾಗಲಿ, ಸ್ವರ್ಗಲೋಕದಲ್ಲಾಗಲಿ, ಮೋಕ್ಷದಲ್ಲಾಗಲಿ ಎಲ್ಲಿದ್ದರೂ ನಮ್ಮ ಮನಸ್ಸು ಯಾವ ಕಾಲದಲ್ಲೂ ನಿನ್ನನ್ನು ಬಿಟ್ಟು ಹೋಗದಿರಲಿ. ನಮ್ಮ ಸ್ವಭಾವಾಪೇಕ್ಷಿತವಾದುದನ್ನು ಕರುಣಿಸು. ನಮ್ಮ ದುರ್ಗಮವಾದ ಕಷ್ಟಕಾಲದಲ್ಲಿ ನನ್ನನ್ನು ಪರಿತ್ಯಾಗ ಮಾಡುವ ಬುದ್ಧಿಯನ್ನು ಮಾಡಬೇಡ.

ಮೊದಲನೆಯ **ಶ್ಲೋಕದಲ್ಲಿ** ಶ್ರೀನೇತೃನಾದ ಶ್ರೀಪತಿಯನ್ನು ಸ್ತುತಿಸಿ ೨ ನೆಯ ಶ್ಲೋಕದಲ್ಲಿ ಲಕ್ಷ್ಮೀದೇವಿಯನ್ನು ಸ್ತುತಿಸಿದ್ದರಿಂದ ಲಕ್ಷ್ಮೀದೇವಿಯನ್ನು ಭಗವದುಪ-

ಸರ್ಜನತಯಾ ಸ್ತುತಿಸಿದಂತಾಗುತ್ತದೆ. ಇದಲ್ಲದೇ ಪ್ರಥಮ ಶ್ಲೋಕವು ಸ್ರಗ್ಧರಾ ವೃತ್ತದಲ್ಲಿದ್ದು ಇದು ಶಾರ್ದೂಲವಿಕ್ರೀಡಿತ ವೃತ್ತದಲ್ಲಿರುವದೂ ಒಂದು ವಿಶೇಷ.

**ಗುಣಪ್ರಕಾಶ :** ಸಪ್ತಮೂಲಗುರುಗಳಲ್ಲಿ ಇನ್ನೊಬ್ಬಳಾದ ಲಕ್ಷ್ಮಿಯು ಭಾಗ್ಯದೇವತೆಯಾಗಿದ್ದಾಳೆ. 'ಮಾತಃ' ಎಂಬ ವಿಶೇಷಣದಿಂದ ಲಕ್ಷ್ಮಿಯ ಸರ್ವಜನಪೋಷಕತ್ವ ಗುಣವೂ, 'ಉಪಕಲ್ಪಿತಾಖಿಲಜಗತ್ಸರ್ಗೇ' ಎಂಬುದರಿಂದ ಸಕಲ ಪ್ರಪಂಚದ ಸೃಷ್ಟಿಕರ್ತೃತ್ವವೂ, 'ಲಾವಣ್ಯಾದಧರೀಕೃತಾಮರವಧೂವರ್ಗೇ' (ಸೌಂದರ್ಯದಲ್ಲಿ ದೇವತಾಸ್ತ್ರೀಯರ ಸೌಂದರ್ಯವನ್ನು ಕಡಿಮೆ ಮಾಡಿದವಳು) ಎಂಬುದರಿಂದ ಅವಳ ಅಸಾಮಾನ್ಯ ಸೌಂದರ್ಯವೂ ವ್ಯಕ್ತವಾಗುತ್ತದೆ.

೩. **ಅವತಾರಿಕಾ :** ಈಗ ಶ್ರೀಮುಖ್ಯಪ್ರಾಣದೇವರ ಪ್ರಾರ್ಥನಾರೂಪ ಮಂಗಳವನ್ನು ಆಚರಿಸುತ್ತಾರೆ.

**ಶ್ರೀಮದ್ರಾಮಾಭಿರಾಮಾಮಿತಮಹಿಮಪದಪ್ರೌಢಪಾಥೋರುಹಾಲಿಃ**
**ಕೃಷ್ಣಾನಿಷ್ಟಾಮಿತಕ್ಷ್ಮಾಪರಿವೃಢಪಟಲೀಪಾಟನೈಕಪ್ರವೀಣಃ ।**
**ವೇದವ್ಯಾಸೋಪದೇಶಾಧಿಕಸಮಧಿಗತಾನಂತವೇದಾಂತಭಾವೋ**
**ಭೂಯಾತ್ಕೀಶಾವನೀಶವ್ರತಿತನುರನಿಲಃ ಶ್ರೇಯಸೇ ಭೂಯಸೇ ನಃ ॥ ೩ ॥**

**ಅನ್ವಯಾರ್ಥ :** **ಶ್ರೀಮದ್ರಾಮಾಭಿರಾಮಾಮಿತಮಹಿಮಪದಪ್ರೌಢಪಾಥೋರುಹಾಲಿಃ** – **ಶ್ರೀಮತ್** = ಕಾಂತಿಯುಕ್ತನಾದ, **ರಾಮ** = ಶ್ರೀರಾಮಚಂದ್ರನ, **ಅಭಿರಾಮ** = ಮನೋಹರವಾದ ಮತ್ತು, **ಅಮಿತಮಹಿಮ** = ಅಮಿತವಾದ ಮಹಿಮೆಗಳಿಂದ ಯುತವಾದ, **ಪದ** = ಎರಡು ಪಾದಗಳೆಂಬ, **ಪ್ರೌಢಪಾಥೋರುಹ** = ಶ್ರೇಷ್ಠಕಮಲಗಳಲ್ಲಿ, **ಅಲಿಃ** = ಭ್ರಮರದಂತೆ ಆಸಕ್ತನಾಗಿರುವ, (ಹನುಮದ್ರೂಪೀ ಶ್ರೀಮುಖ್ಯಪ್ರಾಣನು), **ಕೃಷ್ಣಾನಿಷ್ಟಾಮಿತಕ್ಷ್ಮಾಪರಿವೃಢಪಟಲೀಪಾಟನೈಕಪ್ರವೀಣಃ** – **ಕೃಷ್ಣ** = ಶ್ರೀಕೃಷ್ಣನ ಅಥವಾ **ಕೃಷ್ಣಾ** = ದ್ರೌಪದೀದೇವಿಯ, **ಅನಿಷ್ಟ** = ದ್ವೇಷಿಗಳಾದ, **ಅಮಿತ** = ಅಸಂಖ್ಯ, **ಕ್ಷ್ಮಾಪರಿವೃಢ** = ರಾಜರುಗಳ, **ಪಟಲೀ** = ಸಮೂಹವನ್ನು, **ಪಾಟನ** = ನಾಶ ಮಾಡುವಲ್ಲಿ, **ಏಕಪ್ರವೀಣಃ** = ಅತ್ಯಂತಸಮರ್ಥನಾದ (ಭೀಮರೂಪೀ ಶ್ರೀಮುಖ್ಯಪ್ರಾಣನು), **ವೇದವ್ಯಾಸೋಪದೇಶಾಧಿಕಸಮಧಿಗತಾನಂತವೇದಾಂತಭಾವಃ** – **ವೇದವ್ಯಾಸ** = ಶ್ರೀವೇದವ್ಯಾಸರ, **ಉಪದೇಶ** = ಉಪದೇಶಗಳಿಂದ, **ಅಧಿಕ** = ಹೆಚ್ಚಾಗಿ, ಹಾಗೂ **ಸಮಧಿಗತ** = ಚೆನ್ನಾಗಿ ತಿಳಿಯಲ್ಪಟ್ಟ, **ಅನಂತ** = ಅನಂತವಾದ, **ವೇದ** = ವೇದೋಪನಿಷತ್ತುಗಳು ಮತ್ತು **ಅಂತ** = ವೇದಾರ್ಥನಿರ್ಣಾಯಕವಾದ ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರ ಇವುಗಳ, **ಭಾವಃ** = ಅಭಿಪ್ರಾಯವುಳ್ಳ (ಮಧ್ವರೂಪೀ ಶ್ರೀಮುಖ್ಯಪ್ರಾಣನು), **ಕೀಶಾವನೀಶವ್ರತಿತನುಃ** – **ಕೀಶ** = ಕಪಿರೂಪವುಳ್ಳ ಹನುಮಂತ, **ಅವನೀಶ** =

ಭೂಪತಿಯಾದ ಭೀಮಸೇನ, ಮತ್ತು ವ್ರತಿ = ಯತಿರೂಪಿಯಾದ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು ಇವರುಗಳ ತನುಃ = ರೂಪದಿಂದ ಅವತರಿಸಿದ, ಅನಿಲಃ = ಶ್ರೀಮುಖ್ಯಪ್ರಾಣನು, ನಃ = ನಮಗೆ, ಭೂಯಸೇ ಶ್ರೇಯಸೇ = ಮಹತ್ ಪುರುಷಾರ್ಥವಾದ ಮೋಕ್ಷವು ಸಿಗುವಂತೆ, ಭೂಯಾತ್ = ಅನುಗ್ರಹಿಸುವಂಥವನಾಗಲಿ.

**ತಾತ್ಪರ್ಯಾರ್ಥ** : ಕಾಂತಿಯುತನಾದ ಶ್ರೀರಾಮಚಂದ್ರನ ಮನೋಹರವಾದ ಹಾಗೂ ಅಮಿತವಾದ ಮಹಿಮೆಗಳಿಂದ ಕೂಡಿದ ಪಾದಕಮಲಗಳಲ್ಲಿ ಭ್ರಮರದಂತಿರುವ (**ಕೀಶತನುಃ** = ಹನುಮಂತನ ಅವತಾರವುಳ್ಳ ಮುಖ್ಯಪ್ರಾಣನು), ಶ್ರೀಕೃಷ್ಣನ (ಅಥವಾ ಕೃಷ್ಣೆಯ ಅಂದರೆ ದ್ರೌಪದಿಯ) ಶತ್ರುಗಳಾದ ಅಸಂಖ್ಯ ರಾಜರುಗಳ ಸಮೂಹವನ್ನು ನಾಶಮಾಡುವಲ್ಲಿ ಅತ್ಯಂತ ಸಮರ್ಥನಾದ (**ಅವನೀಶತನುಃ** = ಭೀಮಸೇನನ ಅವತಾರವುಳ್ಳ ಮುಖ್ಯಪ್ರಾಣನು), ಶ್ರೀವೇದವ್ಯಾಸರ ಉಪದೇಶಗಳಿಂದ ಅನಂತ ವೇದ ಹಾಗೂ ಉಪನಿಷತ್ತು-ಗಳ ಮತ್ತು ವೇದಾರ್ಥನಿರ್ಣಾಯಕವಾದ (ಅಂತ = ನಿರ್ಣಾಯಕ) ಬ್ರಹ್ಮಮೀಮಾಂಸಾ ಶಾಸ್ತ್ರದ ಭಾವವನ್ನು ಚೆನ್ನಾಗಿ ತಿಳಿದಿರುವ (**ವ್ರತಿತನುಃ** = ಸನ್ಯಾಸಿಗಳಾದ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರ ಅವತಾರವುಳ್ಳ ಮುಖ್ಯಪ್ರಾಣನು) ಹೀಗೆ ಹನುಮ ಭೀಮ ಮಧ್ವರೂಪಗಳಿಂದ ಅವತರಿಸಿದ ಮುಖ್ಯಪ್ರಾಣನು ನಮಗೆ ಮೋಕ್ಷಾದಿಪುರುಷಾರ್ಥಗಳು ಸಿಗುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ.

**ಗುಣಪ್ರಕಾಶ** : ಸಪ್ತಗುರುಗಳಲ್ಲಿ ಒಬ್ಬರಾದ ಹನುಮಭೀಮಮಧ್ವರೂಪೀ ಶ್ರೀಮುಖ್ಯಪ್ರಾಣನ (ವಾಯುದೇವನ) ಗುಣಸ್ತವನವನ್ನು ಈ ಶ್ಲೋಕದಲ್ಲಿ ಕಾಣುತ್ತೇವೆ. **ಪ್ರಥಮೋ ಹನುಮನ್ನಾಮಾ ದ್ವಿತೀಯೋ ಭೀಮ ಏವ ಚ । ಪೂರ್ಣಪ್ರಜ್ಞಸ್ತೃತೀಯಸ್ತು ಭಗವತ್ಕಾರ್ಯಸಾಧಕಃ ॥** ಮತ್ತು ಬಳಿತ್ಥೇತ್ಯಾದಿ ಸೂಕ್ತಮಂತ್ರಗಳಿಂದ ಮುಖ್ಯಪ್ರಾಣನು ಹನುಮ, ಭೀಮ, ಮಧ್ವರೆಂಬ ಮೂರು ಅವತಾರಗಳುಳ್ಳವನು ಎಂಬುದು ಪ್ರಸಿದ್ಧ. ಈ ಶ್ಲೋಕದ ಒಂದೊಂದು ಚರಣದಲ್ಲಿ ಕ್ರಮವಾಗಿ ಹನುಮಾದಿ ಮೂರು ಅವತಾರಗಳ ಸ್ತವನವನ್ನು ಕಾಣುತ್ತೇವೆ.

**ಶ್ರೀಮದ್ರಾಮಾಭಿರಾಮಾಮಿತಮಹಿಮಪದಪ್ರೌಢಪಾಥೋರುಹಾಲಿಃ** = ಕಾಂತಿಯುಕ್ತ-ನಾದ ಶ್ರೀರಾಮಚಂದ್ರನ ಮನೋಹರವಾದ ಮತ್ತು ಮಿತಿಯಿಲ್ಲದ ಮಹಿಮೋಪೇತವಾದ ದೊಡ್ಡ ಪಾದಕಮಲಗಳಲ್ಲಿ ಭ್ರಮರದಂತೆ ಆಸಕ್ತನಾದವನು ಶ್ರೀಹನುಮಂತ ಎಂದು ಹೇಳುವಲ್ಲಿ ಹನುಮಂತನ ಅರ್ಥಾತ್ ಮುಖ್ಯಪ್ರಾಣನ (ವಾಯುದೇವನ) ಜ್ಞಾನವೈರಾಗ್ಯ ಭಕ್ತಿಗುಣಗಳ ಸ್ತವನವಿದೆ. (**ಜ್ಞಾನೇ ವಿರಾಗೇ ಹರಿಭಕ್ತಿಭಾವೇ ಧೃತಿಸ್ಥಿತಿಪ್ರಾಣಬಲೇಷು ಯೋಗೇ । ಬುದ್ಧೌ ಚ ನಾನ್ಯೋ ಹನುಮತ್ಸಮಾನಃ ಪುಮಾನ್ ಕದಾಚಿತ್ ಕ್ವಚ ಕಶ್ಚನೈವ** ॥)

**ಕೃಷ್ಣಾನಿಷ್ಟಾಮಿತಕ್ಷ್ಮಾಪರಿವೃಢಪಟಲೀಪಾಟನೈಕಪ್ರವೀಣಃ** = ಶ್ರೀಕೃಷ್ಣಪರಮಾತ್ಮ-ನಿಗೆ ಹಾಗೂ ದ್ರೌಪದಿಗೆ ಅಹಿತಕಾರಿಗಳಾದ ಜರಾಸಂಧ, ದುರ್ಯೋಧನಾದಿ ಅಸಂಖ್ಯ

ದುಷ್ಟಭೂಪಾಲರ ಸಮೂಹವನ್ನೇ ನಾಶಮಾಡುವಲ್ಲಿ ಏಕೈಕ ವೀರನಾದವನು ಭೀಮಸೇನ ಎಂಬುದು ಜಗತ್‌ಪ್ರಸಿದ್ಧ. ದುಷ್ಟಶಿಕ್ಷಣ ಶಿಷ್ಟರಕ್ಷಣೆಗಾಗಿ ಅವತರಿಸಿದ ಶ್ರೀಕೃಷ್ಣನನ್ನೇ ಕಾಯಾ ವಾಚಾ ಮನಸಾ ಸದಾ ಅನುಸರಿಸುತ್ತಿರುವ ಭೀಮಸೇನನ ಭಕ್ತಿ ಗುಣದೊಂದಿಗೆ ಬಲ, ಪರಾಕ್ರಮ, ತೇಜಸ್ಸು ಇವೇ ಮೊದಲಾದ ಗುಣಗಳ ಸ್ತವನವೂ ಇಲ್ಲಿ ಕಂಡುಬರುತ್ತದೆ. **(ಭೀಮಸೇನಸಮೋ ನಾಸ್ತಿ ಸೇನಯೋರುಭಯೋರಪಿ । ಪಾಂಡಿತ್ಯೇ ಚ ಪಟುತ್ವೇ ಚ ಶೂರತ್ವೇ ಚ ಬಲೇಽಪಿ ಚ ॥)**

**ವೇದವ್ಯಾಸೋಪದೇಶಾಧಿಕಸಮಧಿಗತಾನಂತವೇದಾಂತಭಾವಃ** = ಮಹಾಬದರಿಯಲ್ಲಿ ಶ್ರೀವೇದವ್ಯಾಸರ ಉಪದೇಶದಿಂದ ಅನಂತ ವೇದೋಪನಿಷತ್ತುಗಳ ಹಾಗೂ ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರದ ತಾತ್ಪರ್ಯವನ್ನು ಚೆನ್ನಾಗಿ ತಿಳಿದವರು ಶ್ರೀಮದಾಚಾರ್ಯರು. ಇಲ್ಲಿ ಗುರುಭಕ್ತಿ, ಜ್ಞಾನ, ಪ್ರತಿಭಾ ಗುಣಗಳ ಸ್ತವನವನ್ನು ಗುರುತಿಸಬಹುದು.

**೪. ಅವತಾರಿಕಾ :** ಆದಿಗುರುಗಳಾದ ಶ್ರೀಮದಾಚಾರ್ಯರನ್ನು ಅಭೀಷ್ಟಸಿದ್ಧಿಗಾಗಿ ಪ್ರಾರ್ಥಿಸುತ್ತಾರೆ.

**ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರವ್ಯವಸಿತನಿಖಿಲಾಭಿಜ್ಞಹೃದ್ಯಾನವದ್ಯಾ-**
**ನಂತತ್ರಯ್ಯಂತಭಾವಪ್ರಕಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರೇ ।**
**ಸಂವರ್ಣ್ಯೇ ಮಂತ್ರವರ್ಣ್ಯೈರನಿತರವಿಷಯಸ್ಪರ್ಶಿಭಿಃ ಪಾವಮಾನೇ**
**ರೂಪೇ ಲೋಕೈಕದೀಪೇ ಪ್ರಸರತು ಹೃದಯಂ ಮಾಮಕಂ ಮಧ್ವನಾಮ್ನಿ ॥ ೪ ॥**

**ಅನ್ವಯಾರ್ಥ :** **ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರವ್ಯವಸಿತನಿಖಿಲಾಭಿಜ್ಞಹೃದ್ಯಾನವದ್ಯಾನಂತತ್ರಯ್ಯಂತಭಾವಪ್ರಕಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರೇ** – **ಉದ್ವೇಲ** = ಅಪರಿಮಿತವಾದ, **ವ್ಯಾಸತಂತ್ರ** = ಶ್ರೀವೇದವ್ಯಾಸಪ್ರಣೀತ ಬ್ರಹ್ಮಮೀಮಾಂಸಾದಿ ಶಾಸ್ತ್ರಗಳಿಂದ, **ವ್ಯವಸಿತ** = ಚೆನ್ನಾಗಿ ನಿರ್ಣಯಿಸಲ್ಪಟ್ಟಿರುವ, **ನಿಖಿಲಾಭಿಜ್ಞ** = ಸಕಲ ಜ್ಞಾನಿಗಳಿಗೆ, **ಹೃದ್ಯ** = ಸಮ್ಮತವಾಗಿರುವ, **ಅನವದ್ಯ** = ದೋಷರಹಿತವಾಗಿರುವ, **ಅನಂತ** = ಅನಂತವಾದ, **ತ್ರಯ್ಯಂತಭಾವ** = ವೇದೋಪನಿಷತ್ತುಗಳ ಭಾವವನ್ನು, **ಪ್ರಕಟನ** = ಪ್ರಕಾಶನಗೊಳಿಸುವಲ್ಲಿಯೂ, **ಘಟನಾ** = ಸ್ಥಾಪಿಸುವಲ್ಲಿಯೂ, **ಸರ್ವತಂತ್ರಸ್ವತಂತ್ರೇ** = ಸರ್ವತಂತ್ರಸ್ವತಂತ್ರರಾದ (ಪರಾಪೇಕ್ಷೆ ಇಲ್ಲದವರಾದ) (ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರಲ್ಲಿ), **ಅನಿತರವಿಷಯಸ್ಪರ್ಶಿಭಿಃ** = ಪರಮಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಪರಮಾತ್ಮನನ್ನು ಮತ್ತು ಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಶ್ರೀವಾಯುದೇವನನ್ನು ಬಿಟ್ಟು ಇತರ ವಿಷಯಗಳಿಗೆ ಸಂಬಂಧಿಸದ (ಅರ್ಥಾತ್ ಶ್ರೀಹರಿವಾಯುವನ್ನು ಬಿಟ್ಟು ಬೇರಿನ್ನಾರನ್ನೂ ಪ್ರತಿಪಾದಿಸದ), **ಮಂತ್ರವರ್ಣ್ಯೈಃ** = ಬಳಿತ್ಥೇತ್ಯಾದಿ ವೇದಮಂತ್ರಗಳಿಂದ, **ಸಂವರ್ಣ್ಯೇ** = ಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಪ್ರತಿಪಾದ್ಯರಾದ (ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರಲ್ಲಿ), **ಲೋಕೈಕದೀಪೇ** – **ಲೋಕ** = ಲೋಕದ

ಸಜ್ಜನರಿಗೆಲ್ಲ, ಏಕ = ಮುಖ್ಯ, ದೀಪೇ = ಜ್ಞಾನದೀಪದಂತಿರುವ, ಪಾವಮಾನೇ = ಪವಮಾನಸಂಬಂಧಿಯಾದ (ಶ್ರೀಮುಖ್ಯಪ್ರಾಣನ), ರೂಪೇ = ಅವತಾರರೂಪವಾದ, ಮಧ್ವನಾಮ್ನಿ = ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರಲ್ಲಿ, ಮಾಮಕಂ = ನನ್ನ ಸಂಬಂಧಿಯಾದ, ಹೃದಯಂ = ಮನಸ್ಸು, ಪ್ರಸರತು = ಸದಾ ಹೋಗುತ್ತಿರಲಿ, ಅಥವಾ ಪ್ರಸ್ಯಜತು = ಆಸಕ್ತವಾಗಿರಲಿ.

**ತಾತ್ಪರ್ಯಾರ್ಥ** : ಶ್ರೀವೇದವ್ಯಾಸರಿಂದ ರಚಿತವಾದ ಅಪಾರವಾದ ಬ್ರಹ್ಮ-ಮೀಮಾಂಸಾ ಮುಂತಾದ ಶಾಸ್ತ್ರಗಳಲ್ಲಿ ಪ್ರತಿಪಾದಿಸಲ್ಪಟ್ಟ ಪ್ರಮೇಯಗಳನ್ನು ಯಥಾವತ್ತಾಗಿ ತಿಳಿದು ನಂತರ ಅನಂತವೇದ ಹಾಗೂ ಉಪನಿಷದಾದಿ ಶಾಸ್ತ್ರಗಳ ಮನೋಹರವಾದ ಹಾಗೂ ನಿರ್ದುಷ್ಟವಾದ ಭಾವಗಳನ್ನು ಹೊಂದಿಸಿ ಸ್ಥಾಪಿಸುವಲ್ಲಿಯೂ ಮತ್ತು ಪ್ರಕಾಶನಗೊಳಿಸುವಲ್ಲಿಯೂ ಸರ್ವತಂತ್ರಸ್ವತಂತ್ರರಾದ (ಪರಾಪೇಕ್ಷೆ ಇಲ್ಲದವರಾದ), ಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಶ್ರೀವಾಯುದೇವನನ್ನು (ಹಾಗೂ ಪರಮಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಪರಮಾತ್ಮನನ್ನು) ಬಿಟ್ಟು ಇನ್ನಾರನ್ನೂ ಪ್ರತಿಪಾದಿಸದ ಬಳಿತ್ಥೇತ್ಯಾದಿ ವೇದಮಂತ್ರಗಳಿಂದ ಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಪ್ರತಿಪಾದ್ಯರಾದ, ಲೋಕದ ಸಜ್ಜನರಿಗೆಲ್ಲ ಮುಖ್ಯಜ್ಞಾನದೀಪ-ದಂತಿರುವ, ಪವಮಾನ ಸಂಬಂಧಿ ಅವತಾರರೂಪವಾದ ಶ್ರೀಮದಾನಂದತೀರ್ಥರಲ್ಲಿ ನನ್ನ ಮನಸ್ಸು ಸದಾ ಆಸಕ್ತವಾಗಿರಲಿ.

**ಗುಣಪ್ರಕಾಶ** : ಈ ಶ್ಲೋಕದಲ್ಲಿ ಆದಿಗುರುಗಳಾದ ಶ್ರೀಮದಾಚಾರ್ಯರ ಗುಣಸ್ತವನವಿದ್ದರೂ "**ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರವ್ಯವಸಿತ ....**" ಎಂಬಲ್ಲಿಯ 'ಉದ್ವೇಲ-ವ್ಯಾಸತಂತ್ರ' ಎಂಬ ಪದಭಾಗದಿಂದ ಮೂಲಗುರುಗಳಾದ ಶ್ರೀವೇದವ್ಯಾಸರ ಗುಣವರ್ಣನೆಯನ್ನೂ ಕಾಣಬಹುದು. 'ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರ' ಎಂದರೆ ಶ್ರೀವೇದವ್ಯಾಸರಿಂದ ರಚಿತವಾದ ಅಪಾರವಾದ ತಂತ್ರ ಎಂದರ್ಥ. ತಂತ್ರಪದಕ್ಕೆ ಶಾಸ್ತ್ರವೆಂದು ವಿಶ್ವಕೋಶಕಾರನು ತಿಳಿಸುತ್ತಾನೆ. 'ಶಾಸ್ತ್ರ' ಎಂದರೆ ಯಾವುದು ?

**ಋಗ್ಯಜುಸ್ಸಾಮಾಥರ್ವಾಶ್ಚ ಭಾರತಂ ಪಂಚರಾತ್ರಕಮ್ ।**
**ಮೂಲರಾಮಾಯಣಂ ಚೈವ ಶಾಸ್ತ್ರಮಿತ್ಯಭಿಧೀಯತೇ ॥**
**ಯಚ್ಚಾನುಕೂಲಮೇತಸ್ಯ ತಚ್ಚ ಶಾಸ್ತ್ರಂ ಪ್ರಕೀರ್ತಿತಮ್ ॥** – (*ಭಾಷ್ಯ ೧.೧.೩. ತತ್ತ್ವಪ್ರದೀಪೇ*) ಈ ಉಕ್ತಿಯಂತೆ ಋಗ್ವೇದ, ಯಜುರ್ವೇದ, ಸಾಮವೇದ, ಅಥರ್ವವೇದ, ಮಹಾಭಾರತ, ಪಂಚರಾತ್ರಾಗಮ, ಮೂಲರಾಮಾಯಣ ಮತ್ತು ಇವುಗಳನ್ನು ಅನುಸರಿಸಿ ಇರುವ ಹಾಗೂ ಇವುಗಳ ಅರ್ಥಾನುಸಂಧಾನಕ್ಕೆ ಅನುಕೂಲ-ವಾಗಿರುವವೆಲ್ಲವೂ '**ಶಾಸ್ತ್ರ**' ಎಂದು ಕರೆಯಲ್ಪಡುತ್ತವೆ.

ಶ್ರೀವೇದವ್ಯಾಸರು ಬ್ರಹ್ಮರುದ್ರೇಂದ್ರಾದಿಗಳಿಂದ ಪ್ರಾರ್ಥಿತರಾಗಿ ಭುವಿಯಲ್ಲಿ ಅವತರಿಸಿ ಅಪಾರವಾದ ವೇದರಾಶಿಯನ್ನು ಋಗಾದಿಗಳನ್ನಾಗಿ ವಿಭಾಗಮಾಡಿದರು.

ಬ್ರಹ್ಮಸೂತ್ರಗಳು, ಪಂಚರಾತ್ರಾಗಮ, ಮೂಲರಾಮಾಯಣ, ಮಹಾಭಾರತ, ಅಷ್ಟಾದಶ-ಪುರಾಣಗಳನ್ನು ರಚಿಸಿದರು. ಈ ಎಲ್ಲ ಗ್ರಂಥಗಳು ಅರ್ಥದಲ್ಲಿ ಅಪಾರವಾಗಿವೆ. ಅಗಮ್ಯವಾಗಿವೆ. ಈ ರೀತಿ ಮುಮುಕ್ಷುಗಳ ಮೇಲಿನ ಕೃಪೆಯಿಂದ ಅಪಾರವಾದ ಶಾಸ್ತ್ರಗ್ರಂಥಗಳನ್ನು ನಿರ್ಮಿಸಿ ಶ್ರೀವೇದವ್ಯಾಸರು ಸಜ್ಜನರನ್ನು ಅನುಗ್ರಹಿಸಿದ್ದಾರೆ ಎಂಬ ಮೂಲ ಗುರುಗಳಾದ ಶ್ರೀವೇದವ್ಯಾಸರ ಗುಣಸ್ತವನವನ್ನು ಈ ಶ್ಲೋಕದಲ್ಲಿ ಕಾಣಬಹುದು. ಸಚ್ಚಿದಾನಂದಾತ್ಮಕನಾದ ಶ್ರೀಹರಿಯ ಜ್ಞಾನ ಮತ್ತು ಲೋಕಕೃಪಾ ಗುಣಗಳ ಮಿಂಚು ಇಲ್ಲಿದೆ.

"ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರ" ಎಂಬ ಪದಭಾಗದಿಂದ ವ್ಯಕ್ತವಾಗುವ ಶ್ರೀವೇದವ್ಯಾಸರ ಅವತಾರಕಾರ್ಯಗಳನ್ನು ಶ್ರೀವಾದಿರಾಜರು ಈ ಕೆಳಗಿನ ತಮ್ಮ ಕೃತಿಯಲ್ಲಿ ಬಹು ಮನೋಹರವಾಗಿ ವರ್ಣಿಸಿದ್ದಾರೆ –

**ಮಧ್ವಾಂತರ್ಗತ ವೇದವ್ಯಾಸಾ । ಕಾಯೋ । ಶುದ್ಧ ಮೂರುತಿಯೇ ಸರ್ವೇಶಾ ॥ಪ.॥ ಶ್ರದ್ಧೆಯಿಂದಲಿ ನಿನ್ನ ಭಜಿಸುವ ಭಕುತರ್ಗೆ । ಬುದ್ಧ್ಯಾದಿಗಳ ಕೊಟ್ಟುದ್ಧರಿಸೋ ದೇವರದೇವ ॥ಅ.ಪ.॥ ದ್ವಾಪರದಲಿ ಒಬ್ಬ ಮುನಿಪ । ತನ್ನ । ಕೋಪದಿಂದಲಿ ಕೊಟ್ಟ ಶಾಪಾ । ಸ್ಥಾಪಿಸಲು ಜ್ಞಾನ ಲೋಪ । ವಾಗೆ । ಆ ಪರತತ್ತ್ವಸ್ವರೂಪ ॥ ಶ್ರೀಪತಿಯೆ ಕಾಯೆಂದು ಮೊರೆಯಿಡೆ । ಪಾಪವಿರಹಿತಳಾದ ಯಮುನೆಯ । ದ್ವೀಪದಲಿ ಅಂಬಿಗರ ಹೆಣ್ಣಿನ । ರೂಪಕೊಲಿದವನಲ್ಲಿ ಜನಿಸಿದೆ ॥ ೧ ॥ ವೇದವಾದಗಳೆಲ್ಲ ಕೆಡಲೂ । ತತ್ತ್ವ । ವಾದಿಜನರು ಬಾಧೆ ಬಡಲೂ । ಮೇದಿನಿಸುರರು ಮೊರೆಯಿಡಲೂ । ನಾನಾ । ವೇದಾದಿ ಭಾಗ ರಚಿಸಲು । ಮೋದದಿಂದ ತದರ್ಥಬೋಧಕ । ವಾದ ಸೂತ್ರ ಪುರಾಣರಚಿಸಿ ವಿ-। ವಾದಗಳನು ನಿರಾಶೆ ಮಾಡಿದ । ಸಾಧುವಂದಿತ ಬಾದರಾಯಣ ॥೨॥ ಸುಮತಿಗಳಿಗೆ ನೀ ಬೋಧಿಸಿದೆ । ಮಿಕ್ಕ । ಕುಮತಂಗಳೆಲ್ಲಾ ಛೇದಿಸಿದೇ । ಕ್ರಮಿಯಿಂದ ರಾಜ್ಯ ವಾಳಿಸಿದೆ । ಜಗ । ತ್ಸ್ವಾಮಿಚರ್ಯವನು ತೋರಿಸಿದೆ ॥ ವಿಮಲರೂಪನೆ ಕಮಲನಾಭನೆ । ರಮೆಯ ವಲ್ಲಭ ರಮ್ಯಚರಿತನೆ । ಮಮತೆಯಲಿ ಕೊಡು ಕಾಮಿತಾರ್ಥವ । ನಮಿಸುವೆನು ಹಯವದನ ಮೂರುತೇ ॥ ೩ ॥**

**ಆದಿಗುರುಗುಣಸ್ತವನ :** ಗುರುಗುಣಸ್ತವನದ ಆಸೆಯ ಶ್ಲೋಕವು ಆದಿಗುರು-ಗಳಾದ ಶ್ರೀಮದಾಚಾರ್ಯರ ಗುಣವರ್ಣನೆಗಾಗಿದ್ದರೂ ಇದರಲ್ಲಿಯೇ ಮೊದಲು ಮೂಲಗುರುಗಳ ಸ್ತವನವನ್ನೂ ಕಂಡುಕೊಂಡೆವು. ಈಗ ಆದಿಗುರುಗಳ ಗುಣವರ್ಣನೆ-ಯನ್ನು ನೋಡೋಣ. ಇಲ್ಲಿ ಆದಿಗುರುಗಳನ್ನು ಸ್ತುತಿಸುವ ವಿಶೇಷಣಗಳು ೫.

೧. **ಉದ್ವೇಲವ್ಯಾಸತಂತ್ರಪ್ಯಮಿತನಿಖಿಲಾಭಿಜ್ಞಹೃದ್ವ್ಯಾನವದ್ಯಾನುತತ್ರ್ಯುತ್ಯಂತಭಾವ-ಪ್ರಕಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರಃ** = ಶ್ರೀಮದಾಚಾರ್ಯರು ಶ್ರೀವೇದವ್ಯಾಸರಿಂದ

ವಿರಚಿತವಾದ ಅಪಾರ ಶಾಸ್ತ್ರಗ್ರಂಥಗಳಿಂದ ಸಕಲಶಾಸ್ತ್ರಪ್ರಮೇಯಗಳನ್ನು ಚೆನ್ನಾಗಿ ತಿಳಿದು ವೇದೋಪನಿಷತ್ತುಗಳ ನಿರ್ದುಷ್ಟವಾದ ಅರ್ಥವನ್ನು ಸರಿಯಾಗಿ ಹೊಂದಿಸಿ ಪ್ರಕಾಶಪಡಿಸುವಲ್ಲಿ ಪರಾನಪೇಕ್ಷರಾಗಿ ಸ್ವತಂತ್ರರಾಗಿದ್ದರು. **ಅನಂತತ್ರ್ಯಯ್ಯಂತಭಾವ ಪ್ರಕಟನಘಟನಾ** ಎಂಬಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರ ಪ್ರತಿಭಾ, ಗ್ರಂಥರಚನಾ ಕೌಶಲ ಮತ್ತು ವೈಶಿಷ್ಟ್ಯಗಳ ಉಲ್ಲೇಖವಿದೆ. ಈ ವಿಶೇಷಣದಲ್ಲಿ ಆದಿಗುರುಗಳ ಸರ್ವಜ್ಞತ್ವ, ಪ್ರತಿಭಾ ಮತ್ತು ಸ್ವಾತಂತ್ರ್ಯ ಗುಣಗಳ ದರ್ಶನವಿದೆ.

೨. **ಅನಿತರವಿಷಯಸ್ಪರ್ಶಿಭಿಃ ಮಂತ್ರವರ್ಣೈಃ ಸಂವರ್ಣ್ಯಃ** = ಪರಮ ಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಪರಮಾತ್ಮಾ ಮತ್ತು ಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಶ್ರೀವಾಯುದೇವರನ್ನು ಬಿಟ್ಟು ಬೇರಾರನ್ನೂ ಪ್ರತಿಪಾದಿಸದ 'ಬಳಿತ್ಥೇತ್ಯಾದಿ' ವೇದಭಾಗಗಳಿಂದ ಶ್ರೀಮದಾಚಾರ್ಯರು ಸ್ತುತ್ಯರಾದವರಾಗಿದ್ದಾರೆ. ಹಾಗಾದರೆ ಬಳಿತ್ಥಾಸೂಕ್ತದಲ್ಲಿ ಬರುವ ಶ್ರೀಮಧ್ವರ ವರ್ಣನೆ ಏನು ಅಂದರೆ **ತೃತೀಯಮಸ್ಯ ವೃಷಭಸ್ಯ ದೋಹಸೇ ದಶಪ್ರಮತಿಂ ಜನಯಂತ ಯೋಷಣಃ || ೨ ||**

— ವೇದಾಭಿಮಾನಿಗಳಾದ ಶ್ರೀಭೂದುರ್ಗಾನಾಮಕ ಲಕ್ಷ್ಮೀ ರೂಪಗಳು ಅಥವಾ ಮಧ್ಯಗೇಹ ಭಟ್ಟರ ಪತ್ನಿಯು, ದೇವಶ್ರೇಷ್ಠರಾದ ಈ ವಾಯುವಿನ ಮೂರನೆಯ ಅವತಾರವಾದ ಪೂರ್ಣಪ್ರಜ್ಞರನ್ನು, ಜ್ಞಾನವೆಂಬ ಹಾಲನ್ನು ಕರೆದು ತುಂಬುವುದಕ್ಕಾಗಿ ಅಂದರೆ ಜ್ಞಾನದೋಹನಕ್ಕಾಗಿ ಪ್ರಸವಿಸಿದರು.

**"ದಶೇತಿ ಸರ್ವಮುದ್ದಿಷ್ಟಂ ಸರ್ವಂ ಪೂರ್ಣಮಿಹೋಚ್ಯತೇ |**
**ಪ್ರಜ್ಞಾ ಪ್ರಮತಿರುದ್ದಿಷ್ಟಾ ಪೂರ್ಣಪ್ರಜ್ಞಸ್ತತಃ ಸ್ಮೃತಃ ||"** ಎಂಬ ಸ್ಮೃತ್ಯನುಸಾರ ದಶಪ್ರಮತಿ ಎಂದರೆ ಪೂರ್ಣಪ್ರಜ್ಞ ಎಂದರ್ಥ. '**ಪೂರ್ಣಪ್ರಜ್ಞಸ್ತಥಾಽನಂದತೀರ್ಥ-ನಾಮಾ ಪ್ರಕೀರ್ತಿತಃ**' ಎಂಬ ವಿವರಣೆಯಿಂದ ಪೂರ್ಣಪ್ರಜ್ಞ ಎಂದರೆ ಆನಂದತೀರ್ಥರು.

**ಯದೀಮನು ಪ್ರದಿವೋ ಮಧ್ವ ಆಧವೇ ಗುಹಾಸಂತಂ ಮಾತರಿಶ್ವಾ ಮಥಾಯತಿ ||೩||**

— ಯಾವ ಕಾರಣದಿಂದ ಈ ಪೂರ್ಣಪ್ರಜ್ಞರು ಸುಖಸಾಧನವಾದ ಶಾಸ್ತ್ರವನ್ನು ರಚಿಸಿದರೋ ಮತ್ತು ಯಾವ ಕಾರಣದಿಂದ ಆ ಶಾಸ್ತ್ರದ ಶ್ರವಣಾದ್ಯುಪಾಸನೆಯಿಂದ ಸ್ವಸ್ವರೂಪಾನಂದವು ಮೋಕ್ಷದಲ್ಲಿ ಅಭಿವ್ಯಕ್ತವಾಗುವದೋ, ಆ ಕಾರಣದಿಂದ ಶ್ರುತಿಯು ಆ ತೃತೀಯಾವತಾರವನ್ನು 'ಮಧ್ವ' ಎಂಬ ನಾಮದಿಂದ ನಿರ್ದೇಶ ಮಾಡುತ್ತದೆ.

'**ಮಧ್ವಿತ್ಯಾನಂದ ಉದ್ದಿಷ್ಟೋ ವೇತಿ ತೀರ್ಥಮುದಾಹೃತಮ್ | ಮಧ್ವ ಆನಂದತೀರ್ಥಃ ಸ್ಯಾತ್ ತೃತೀಯಾ ಮಾರುತೀತನುಃ ||**' (ಭಾವವೃತ್ತ) ಎಂಬ ಸ್ಮೃತ್ಯನುಸಾರ ಆನಂದದಾಯಕ-ವಾದ ಶಾಸ್ತ್ರವನ್ನು ರಚಿಸಿದ್ದರಿಂದ ಮಧ್ವರು ಆನಂದತೀರ್ಥರೆಂದೂ ಕರೆಯಲ್ಪಡುತ್ತಾರೆ.

ಬಳಿತ್ಥಾಸೂಕ್ತದ ಈ ವಿವರಣೆಯಿಂದ ಆದಿಗುರುಗಳ ಜ್ಞಾನಾನಂದಾದಿ ಗುಣಗಳು, ಮುಮುಕ್ಷುಗಳಿಗಾಗಿ ಗ್ರಂಥರಚನೆ ಮಾಡಿದ್ದರಿಂದ ಅವರ ದಯಾ ಅಥವಾ ಕೃಪಾ ಗುಣಗಳು ವ್ಯಕ್ತವಾಗುವವು.

೩. ಪಾವಮಾನಃ = 'ಪವಮಾನ' ನಾಮಕ ಶ್ರೀಹರಿಗೆ ಅತ್ಯಂತ ಪ್ರೀತ್ಯಾಸ್ಪದರು ಅಥವಾ ಪವಮಾನ ನಾಮಕ ಮುಖ್ಯಪ್ರಾಣನ ರೂಪಿಗಳು ಅಥವಾ "ಪಾವನಾತ್ ಪವಮಾನಶ್ಚ" ಪವಿತ್ರೀಕರಿಸುವುದರಿಂದ ಪವಮಾನ ನಾಮಕರಾದವರು. ಇನ್ನೊಬ್ಬರನ್ನೂ ಪವಿತ್ರೀಕರಿಸುವ ಸಾಮರ್ಥ್ಯವುಳ್ಳ ಆದಿಗುರುಗಳ 'ಶೌಚ' ಗುಣವು ಇಲ್ಲಿ ವ್ಯಕ್ತವಾಗಿದೆ. ಪರಶುಕ್ಲತ್ರಯರಲ್ಲಿ ಪರಿಗಣಿತರಾದ ಶ್ರೀಮದಾಚಾರ್ಯರಲ್ಲಿ ಶೌಚಗುಣವಿದೆ ಎಂದು ಪ್ರತ್ಯೇಕವಾಗಿ ಹೇಳುವ ಅವಶ್ಯಕತೆಯೇ ಇಲ್ಲ.

**ವಾಯುಸ್ಥಮಾಶ್ರಿತಾ ದೇವಾಃ ಪವಮಾನಾಭಿಧಂ ಹರಿಂ । ಸಂಸಾರಾತ್ ಪಾವಯಿತ್ವಾ ಯತ್ ಮಹಾನಂದೇ ಮಿನೋತ್ಯಯಂ । ಪವಮಾನಸ್ತತೋ ವಿಷ್ಣುಃ ವ್ಯಾಪ್ತಃ ಸರ್ವಾಸು ದಿಕ್ಷು ಚ ॥** (*ಐತರೇಯ ಭಾಷ್ಯ ೨-೧-೨*)

– ಸಂಸಾರದಿಂದ ಜೀವರನ್ನು ಮುಕ್ತಗೊಳಿಸಿ ಮಹಾನಂದದಲ್ಲಿ ಮುಳುಗಿಸುವುದರಿಂದ ವಿಷ್ಣುವು ಪವಮಾನ ನಾಮಕನಾಗಿದ್ದಾನೆ. ಮತ್ತು ಇಂಥ ವಿಷ್ಣುವು ಮುಖ್ಯಪ್ರಾಣಾವತಾರ ಶ್ರೀಮದಾಚಾರ್ಯರಲ್ಲಿ ಸದಾ ಸನ್ನಿಹಿತನಾಗಿದ್ದಾನೆ.

೪. ಲೋಕೈಕದೀಪಃ = ಸಜ್ಜನರಿಗೆ ಪ್ರಧಾನ ಜ್ಞಾನಪ್ರಕಾಶಕರು. ಇಲ್ಲಿ ಆದಿಗುರುಗಳ ಜ್ಞಾನ ಹಾಗೂ ಕೃಪಾ ಗುಣಗಳ ಉಲ್ಲೇಖವಿದೆ. ಸರ್ವಜ್ಞರೂ, ಪೂರ್ಣಬೋಧರೂ, ಪ್ರತಿಭಾಂಬುಧಿಗಳೂ ಆದ ಶ್ರೀಮದಾಚಾರ್ಯರ ಜ್ಞಾನ ಗುಣವು ಅಸದೃಶವಾಗಿರುವುದರಿಂದ ಏಕದೀಪ ಎಂದು ಸ್ತುತ್ಯರಾಗಿದ್ದಾರೆ.

೫. **ಮಧ್ವನಾಮಾ = ಮಧ್ವಿತ್ಯಾನಂದ ಉದ್ದಿಷ್ಟೋ ವೇತಿ ತೀರ್ಥಮುದಾಹೃತಮ್ । ಮಧ್ವ ಆನಂದತೀರ್ಥಃ ಸ್ಯಾತ್ ತೃತೀಯಾ ಮಾರುತೀತನುಃ ॥** ಎಂಬ ಸ್ಮೃತ್ಯುಕ್ತಿಯಂತೆ ಮುಮುಕ್ಷುಗಳಿಗಾಗಿ ಆನಂದದಾಯಕವಾದ ಶಾಸ್ತ್ರಗ್ರಂಥಗಳನ್ನು ನಿರ್ಮಿಸಿದ ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರ ಕೃಪಾಗುಣದ ಪ್ರಸ್ತಾವನೆ ಇಲ್ಲಿದೆ.

**೫. ಅವತಾರಿಕಾ :** ಟೀಕಾಕಾರರಾದ ಶ್ರೀಜಯತೀರ್ಥಮುನಿಗಳನ್ನು ಸ್ತುತಿಸುತ್ತಾರೆ.

**ವಿಜ್ಞಾನೋದರ್ಕತರ್ಕಪ್ರತಿಪದಮಧುರೋದಾರಸಂದರ್ಭಗರ್ಭ-**
**ಪ್ರೌಢಾನೇಕಪ್ರಬಂಧಪ್ರಕಟಿತಭಗವತ್ಪಾದಭಾಷ್ಯಾದಿಭಾವಃ ।**
**ಮಿಥ್ಯಾವಾದಾಪವಾದಪ್ರಕುಪಿತವಿಮತಧ್ವಾಂತಸಂತಾನಭಾನುಃ**
**ಜೀಯಾದನ್ಯೈರಜಯ್ಯಃ ತ್ರಿಭುವನವಿದಿತಾಶ್ಚರ್ಯಚರ್ಯೋ ಜಯಾರ್ಯಃ ॥೫॥**

**ಅನ್ವಯಾರ್ಥ :** ವಿಜ್ಞಾನೋದರ್ಕತರ್ಕಪ್ರತಿಪದಮಧುರೋದಾರಸಂದರ್ಭಗರ್ಭ-ಪ್ರೌಢಾನೇಕಪ್ರಬಂಧಪ್ರಕಟಿತಭಗವತ್ಪಾದಭಾಷ್ಯಾದಿಭಾವಃ – ವಿಜ್ಞಾನ = ವಿಶೇಷಜ್ಞಾನವೇ, ಉದರ್ಕ = ಫಲವಾಗಿವುಳ್ಳ, ತರ್ಕ = ಯುಕ್ತಿಗಳಿಂದ ಕೂಡಿದ, ಪ್ರತಿಪದ = ಪ್ರತಿಯೊಂದು ಪದದಿಂದಲೂ, ಮಧುರ = ಮನೋಹರವಾದ, ಉದಾರ = ಉತ್ಕೃಷ್ಟವಾದ, ಸಂದರ್ಭ = ವಾಕ್ಯರಚನೆಗಳನ್ನು, ಗರ್ಭ = ಒಳಗೊಂಡಿರುವ, ಪ್ರೌಢ = ಶಬ್ದಾರ್ಥಗಳಿಂದ ಮಹತ್ತರವಾದ ಸುಧಾದಿ ಅನೇಕ = ಅನೇಕ, ಪ್ರಬಂಧ = ಗ್ರಂಥಗಳ ಮೂಲಕ, ಪ್ರಕಟಿತ = ಪ್ರಕಾಶಗೊಳಿಸಲ್ಪಟ್ಟ, ಭಗವತ್ಪಾದಭಾಷ್ಯಾದಿಭಾವಃ = ಪೂಜ್ಯರಾದ ಶ್ರೀಮನ್ಮಧ್ವಾಚಾರ್ಯರ ಭಾಷ್ಯಾದಿ ಗ್ರಂಥಗಳ ಭಾವವುಳ್ಳ (ಜಯಾರ್ಯರು), ಮಿಥ್ಯಾವಾದಾಪವಾದಪ್ರಕುಪಿತವಿಮತಧ್ವಾಂತಸಂತಾನಭಾನುಃ – ಮಿಥ್ಯಾವಾದ = ಪ್ರಪಂಚಮಿಥ್ಯಾತ್ವ ಮುಂತಾದ, ಅಪವಾದ = ಅಸಮೀಚೀನವಾದ ವಾದಗಳಿಂದ, ಪ್ರಕುಪಿತ = ಪ್ರವೃದ್ಧವಾದ ಅಂದರೆ ಎಲ್ಲೆಡೆ ವ್ಯಾಪಿಸಿದ, ವಿಮತ = ದುರ್ಮತಗಳೆಂಬ, ಧ್ವಾಂತ = ಕತ್ತಲೆಯ, ಸಂತಾನ = ಸಂತತಿಗೆ (ಪರಂಪರೆಗೆ), ಭಾನುಃ = ಸೂರ್ಯ-ನಂತಿರುವ (ಜಯಾರ್ಯರು), ಅಥವಾ ಮಿಥ್ಯಾವಾದ = ಮಿಥ್ಯಾವಾದಗಳ, ಅಪವಾದ = ಖಂಡನೆಯಿಂದ, ಪ್ರಕುಪಿತ = ಬಹು ಕೋಪಗೊಂಡ, ವಿಮತ = ಅದ್ವೈತಾದಿ ವಿರುದ್ಧ ಮತಗಳೆಂಬ, ಧ್ವಾಂತಸಂತಾನ = ಕತ್ತಲೆಯ ಸಂತಾನಕ್ಕೆ, ಭಾನುಃ = ಸೂರ್ಯನಂತಿರುವ (ಜಯಾರ್ಯರು), ಅನ್ಯೈಃ = ಪರವಾದಿಗಳಿಂದ, ಅಜಯ್ಯಃ = ಜಯಿಸಲಶಕ್ಯರಾದ, ತ್ರಿಭುವನವಿದಿತಾಶ್ಚರ್ಯಚರ್ಯಃ – ತ್ರಿಭುವನ = ಮೂರ್ಲೋಕಗಳಲ್ಲಿಯೂ, ವಿದಿತ = ಪ್ರಖ್ಯಾತವಾದ, ಆಶ್ಚರ್ಯ = ಆಶ್ಚರ್ಯಜನಕವಾದ, ಚರ್ಯಃ = ಚರಿತ್ರೆಗಳುಳ್ಳ, ಜಯಾರ್ಯಃ = ಶ್ರೀಜಯತೀರ್ಥ ಗುರುವರ್ಯರು, ಜೀಯಾತ್ = ಉತ್ಕೃಷ್ಟರಾಗಿರಲಿ (ಉತ್ಕೃಷ್ಟರಾಗಿಯೇ ಇರುತ್ತಾರೆ).

**ತಾತ್ಪರ್ಯಾರ್ಥ :** ವಿಶಿಷ್ಟಜ್ಞಾನವೇ ಫಲವಾಗಿವುಳ್ಳ ತರ್ಕಗಳಿಂದ (ಯುಕ್ತಿ) ಕೂಡಿದ, ಪ್ರತಿಪದಗಳಲ್ಲಿಯೂ (ಪ್ರತಿಪದದಿಂದಲೂ) ಮನೋಹರವಾದ ಹಾಗೂ ಉತ್ಕೃಷ್ಟವಾದ ವಾಕ್ಯ ರಚನೆಗಳಿಂದ ಯುಕ್ತವಾದ ಸುಧಾದಿ ಅನೇಕ ಪ್ರೌಢಗ್ರಂಥಗಳನ್ನು ರಚಿಸಿ ಆ ಮೂಲಕ ಶ್ರೀಮದಾಚಾರ್ಯರ ಭಾಷ್ಯಾದಿ ಗ್ರಂಥಗಳ ಭಾವವನ್ನು ಪ್ರಕಟಪಡಿಸಿದವರೂ, ಪ್ರಪಂಚಮಿಥ್ಯಾತ್ವ ಮುಂತಾದ ಅಸಮೀಚೀನವಾದ ವಾದಗಳಿಂದ ಪ್ರವೃದ್ಧವಾದ ಪರಮತಗಳೆಂಬ ಕತ್ತಲೆಯನ್ನು ಓಡಿಸುವಲ್ಲಿ ಪ್ರಖರವಾದ ಸೂರ್ಯನಂತಿರು-ವವರೂ (ಅಥವಾ ಮಿಥ್ಯಾವಾದಗಳ ಖಂಡನೆಯಿಂದ ಬಹುಕೋಪಗೊಂಡ ಅದ್ವೈತಾದಿಗಳ ವಿರುದ್ಧಮತಗಳೆಂಬ ಕತ್ತಲೆಗೆ ಸೂರ್ಯನಂತಿರುವವರೂ), ಪರವಾದಿಗಳಿಂದ ಅಜಯ್ಯ-ರಾದ(ಜಯಿಸಲಶಕ್ಯರಾದ)ವರೂ, ಮೂರು ಲೋಕಗಳಲ್ಲಿಯೂ ಪ್ರಸಿದ್ಧವಾದ ಚಿತ್ರವಿಚಿತ್ರವಾದ

ಮಹಿಮೆಗಳುಳ್ಳವರೂ ಆದ ಶ್ರೀಜಯತೀರ್ಥ ಗುರುವರ್ಯರು ಸದಾ ಉತ್ಕೃಷ್ಟ-ರಾಗಿರುತ್ತಾರೆ.

**ಗುಣಪ್ರಕಾಶ :** (ಶ್ಲೋಕ ೫ ರಿಂದ ೮ ರ ವರೆಗೆ ಪೂರ್ವಗುರುಗಳ ಗುಣಸ್ತವನವಿದೆ). ಈ ಶ್ಲೋಕದಲ್ಲಿ ೪ ವಿಶೇಷಣಗಳಿಂದ ಶ್ರೀಟೀಕಾಕೃತ್ಪಾದರ ಸ್ತುತಿ ಮಾಡಲ್ಪಟ್ಟಿರುತ್ತದೆ.

೧. **ವಿಜ್ಞಾನೋದರ್ಕತರ್ಕಪ್ರತಿಪದಮಧುರೋದಾರಸಂದರ್ಭಗರ್ಭಪ್ರೌಢಾನೇಕ ಪ್ರಬಂಧಪ್ರಕಟಿತಭಗವತ್ಪಾದಭಾಷ್ಯಾದಿಭಾವಃ** = ಅನಿಷ್ಟ ಪ್ರಸಂಜನರೂಪಯುಕ್ತಿ-ಗಳಿಂದ ಹಾಗೂ ಪ್ರತಿಪದಗಳಲ್ಲಿಯೂ ಮನೋಹರವಾದ ಉತ್ಕೃಷ್ಟ ವಾಕ್ಯರಚನೆಗಳಿಂದ ಯುಕ್ತವಾದ ಸುಧಾದಿ ಪ್ರೌಢಗ್ರಂಥಗಳಿಂದ ಶ್ರೀಮದಾಚಾರ್ಯರ ಭಾಷ್ಯಾದಿಗ್ರಂಥಗಳ ಭಾವವನ್ನು ಪ್ರಕಟಗೊಳಿಸಿದವರು ಶ್ರೀಟೀಕಾಕೃತ್ಪಾದರು.

ಇಲ್ಲಿ ಟೀಕಾಕೃತ್ಪಾದರ ಪ್ರತಿಭೆ ಹಾಗೂ ಜ್ಞಾನಗುಣಗಳ ಪ್ರಕಾಶನವಿದೆ. 'ಭಗವತ್ಪಾದಭಾಷ್ಯ' ಎಂದು ಹೇಳುವಾಗ ಆದಿಗುರುಗಳ ಐಶ್ವರ್ಯ, ಜ್ಞಾನ, ಭಕ್ತ್ಯಾದಿ ಷಡ್ಗುಣಗಳ ವರ್ಣನೆ ಇದೆ.

**"ಭಗ ಐಶ್ವರ್ಯಮಾಹಾತ್ಮ್ಯಜ್ಞಾನವೈರಾಗ್ಯಯೋನಿಷು । ವೀರ್ಯಕೀರ್ತಿ-ಪ್ರಯತ್ನೇಷು ಶ್ರೀಧರ್ಮರವಿಮುಕ್ತಿಷು ॥"** – *ಅಭಿಧಾನ ಭಾಗ. ೬.೧೧.೧೯* ಮತ್ತು **ಐಶ್ವರ್ಯಸ್ಯ ಸಮಗ್ರಸ್ಯ ವೀರ್ಯಸ್ಯ ಯಶಸಃ ಶ್ರಿಯಃ । ಜ್ಞಾನವಿಜ್ಞಾನಯೋಶ್ಚೈವ ಷಣ್ಣಾಂ ಭಗ ಇತೀರಣಾ ॥** – *ಭಾಗ. ೮.೮.೩೨* (ಸತ್ಯಧರ್ಮೀಯ ವ್ಯಾಖ್ಯಾನ.)

೨. **ಮಿಥ್ಯಾವಾದಾಪವಾದಪ್ರಕುಪಿತವಿಮತಧ್ವಾಂತಸಂತಾನಭಾನುಃ** = ಮಿಥ್ಯಾತ್ವ-ವಾದ ಮೊದಲಾದ ದುರ್ವಾದಿಗಳೆಂಬ ಕತ್ತಲೆಗೆ ಸೂರ್ಯನಂತಿರುವ ಟೀಕಾಕೃತ್ಪಾದರು.

೩. **ಅನ್ಯೈಃ ಅಜಯ್ಯಃ** = ಪರವಾದಿಗಳಿಂದ ಜಯಸಿಲಶಕ್ಯರಾದ ಟೀಕಾಕೃತ್ಪಾದರು. ಇಲ್ಲಿ ಟೀಕಾಕೃತ್ಪಾದರ ತೇಜೋ (**ತೇಜಃ = ಪರೈರನಭಿಭವಃ**) ಗುಣದ (ಜಯಶೀಲತೆ ಎಂಬ ಗುಣದ) ಪ್ರಸ್ತಾವನೆ ಇದೆ.

೪. **ತ್ರಿಭುವನವಿದಿತಾಶ್ಚರ್ಯಚರ್ಯಃ** = ಮೂರ್ಲೋಕಗಳಲ್ಲಿ ಪ್ರಖ್ಯಾತವಾದ ಅದ್ಭುತ ಚರಿತ್ರೆಯುಳ್ಳವರು. ಇಲ್ಲಿ ಅದ್ಭುತ ಮಹಿಮೆಯ ಸ್ತುತಿ ಇದೆ.

**೬. ಅವತಾರಿಕಾ :** ಶ್ರೀವಿಬುಧೇಂದ್ರತೀರ್ಥರನ್ನು ಸ್ತುತಿಸುತ್ತಾರೆ.

**ಶ್ರೀಮತ್ಪೂರ್ಣಪ್ರಬೋಧಪ್ರಕಟಿತಪದವೀಧಾವಿಮೇಧಾವಿಧೀಮತ್-**
**ಸೇನಾನಾಸೀರಸೀಮಾಸಮುದಿತವಿದಿತಾಬಾಧಯೋಧಾಧಿನೇತಾ ।**
**ಮಾಯಾಸಿದ್ಧಾಂತದೀಕ್ಷಾವಿಘಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರಃ**
**ಶ್ರೀರಾಮವ್ಯಾಸದಾಸೋ ವಿಲಸತಿ ವಿಬುಧೇಂದ್ರಾಭಿಧಸ್ಸಂಯಮೀಂದ್ರಃ ॥೬॥**

**ಅನ್ವಯಾರ್ಥ** : ಶ್ರೀಮತ್ಪೂರ್ಣಪ್ರಬೋಧಪ್ರಕಟಿತಪದವೀಧಾವಿಮೇಧಾವಿಧೀಮತ್ಸೇನಾನಾಶೀರಸೀಮಾಸಮುದಿತವಿದಿತಾಬಾಧಯೋಧಾಧಿನೇತಾ – **ಶ್ರೀಮತ್** = ಕಾಂತಿಸಂಪನ್ನರಾದ, **ಪೂರ್ಣಪ್ರಬೋಧ** = ಪೂರ್ಣಪ್ರಜ್ಞರಾದ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರಿಂದ, **ಪ್ರಕಟಿತ** = ಪ್ರಕಾಶಿಸಲ್ಪಟ್ಟು ಪ್ರವರ್ತಿತವಾದ, **ಪದವೀ** = ಸದ್ವೈಷ್ಣವ ಮಾರ್ಗದಲ್ಲಿ, **ಧಾವಿ** = ನಡೆಯುತ್ತಿರುವ, **ಮೇಧಾವಿ** = ಪ್ರತಿಭಾಶಾಲಿಗಳಾದ ಅನೇಕ, **ಧೀಮತ್** = ವಿದ್ವಾಂಸರ ಹಾಗೂ ದೇವತೆಗಳ, **ಸೇನಾ** = ಸೇನೆಗಳ, **ನಾಸೀರ ಸೀಮಾ** = ಆಯಕಟ್ಟಿನ ಸ್ಥಳಗಳಲ್ಲಿ (ಪ್ರಮುಖ ಸ್ಥಾನಗಳಲ್ಲಿ), **ಸಮುದಿತ** = ರಾರಾಜಿಸುವ, **ವಿದಿತ** = ಪ್ರಖ್ಯಾತರಾದ ಹಾಗೂ **ಅಬಾಧ** = ಅಜೇಯರಾದ, **ಯೋಧ** = ಯೋಧರಿಗೆ (ಭಟರಿಗೆ), **ಅಧಿನೇತಾ** = ನಾಯಕರಾದ (ಶ್ರೀವಿಬುಧೇಂದ್ರರು), **ಮಾಯಾಸಿದ್ಧಾಂತದೀಕ್ಷಾವಿಘಟನಘಟನಾಸರ್ವತಂತ್ರಸ್ವತಂತ್ರಃ** – **ಮಾಯಾಸಿದ್ಧಾಂತ** = ಮಾಯಾವಾದ ಮತ ಮತ್ತು ದ್ವೈತಸಿದ್ಧಾಂತ ಇವುಗಳಲ್ಲಿರುವ, **ದೀಕ್ಷಾ** = ನಿಷ್ಠೆಯನ್ನು, **ವಿಘಟನಘಟನಾ** = ಕ್ರಮವಾಗಿ ನಿರಸನಗೊಳಿಸುವಲ್ಲಿಯೂ ಮತ್ತು ಸ್ಥಾಪಿಸುವಲ್ಲಿಯೂ, **ಸರ್ವತಂತ್ರ** = ಸರ್ವದರ್ಶನಗಳಲ್ಲಿಯೂ, **ಸ್ವತಂತ್ರಃ** = ಪರಾನಪೇಕ್ಷರಾದ (ಶ್ರೀವಿಬುಧೇಂದ್ರರು), **ಶ್ರೀರಾಮವ್ಯಾಸದಾಸಃ** = ಶ್ರೀಮೂಲರಘುಪತಿ ವೇದವ್ಯಾಸರ ಆರಾಧಕರಾದ, **ವಿಬುಧೇಂದ್ರಾಭಿಧಃ** = ಶ್ರೀವಿಬುಧೇಂದ್ರತೀರ್ಥರೆಂಬ ಹೆಸರುಳ್ಳ, **ಸಂಯಮೀಂದ್ರಃ** = ಯತಿವರ್ಯರು, **ವಿಲಸತಿ** = ಶೋಭಿಸುತ್ತಾರೆ.

**ತಾತ್ಪರ್ಯಾರ್ಥ** : ಶ್ರೀಮನ್ಮಧ್ವಾಚಾರ್ಯರಿಂದ ಪ್ರಕಾಶಿಸಲ್ಪಟ್ಟು ಪ್ರವರ್ತಿತವಾದ ಸದ್ವೈಷ್ಣವ ಮಾರ್ಗದಲ್ಲಿ ನಡೆಯುತ್ತಿರುವ ಮೇಧಾವಿಗಳಾದ ಅನೇಕ ವಿದ್ವಾಂಸರ ಹಾಗೂ ದೇವತೆಗಳ ಸೈನ್ಯಗಳ ಮುಖ್ಯ ಪ್ರದೇಶದಲ್ಲಿ ರಾಜಿಸುವ ಪ್ರಖ್ಯಾತರಾದ ಅಜೇಯ ಭಟರಿಗೆ ನಾಯಕರಾದ, ಸಜ್ಜನರಲ್ಲಿ ಮಾಯಾವಾದದ ಮತದಲ್ಲಿರುವ ನಿಷ್ಠೆಯನ್ನು ನಿರಸನಗೊಳಿಸುವುದರಲ್ಲಿಯೂ ದ್ವೈತಸಿದ್ಧಾಂತದಲ್ಲಿ ನಿಷ್ಠೆಯನ್ನು ಸ್ಥಾಪಿಸುವುದರಲ್ಲಿಯೂ ಪರಾನಪೇಕ್ಷರಾದ ಮತ್ತು ಸಕಲ ಶಾಸ್ತ್ರಗಳಲ್ಲೂ ಪರಾನಪೇಕ್ಷರಾದ ಹಾಗೂ ಶ್ರೀಮನ್ಮೂಲರಘುಪತಿ ವೇದವ್ಯಾಸರ ದಾಸರಾದ, ವಿಬುಧೇಂದ್ರತೀರ್ಥರೆಂಬ ಹೆಸರಿನ ಶ್ರೇಷ್ಠ ಯತಿಗಳು ಶೋಭಿಸುತ್ತಾರೆ.

**ಗುಣಪ್ರಕಾಶ** : ಶ್ರೀವಿಬುಧೇಂದ್ರತೀರ್ಥರ ಸ್ತುತಿಪರವಾದ ಈ ಶ್ಲೋಕದಲ್ಲಿ ೪ ವಿಶೇಷಣಗಳಿವೆ.

೧. **ಶ್ರೀಮತ್ಪೂರ್ಣಪ್ರಬೋಧಪ್ರಕಟಿತಪದವೀಧಾವಿಮೇಧಾವಿಧೀಮತ್ಸೇನಾನಾಶೀರಸೀಮಾಸಮುದಿತವಿದಿತಾಬಾಧಯೋಧಾಧಿನೇತಾ = ಶ್ರೀಮದಾಚಾರ್ಯರಿಂದ ಸ್ಥಾಪಿಸಲ್ಪಟ್ಟ ವೈಷ್ಣವಸಿದ್ಧಾಂತ ಮಾರ್ಗಾವಲಂಬಿಗಳಾದ ವಿದ್ವಾಂಸರ ಮತ್ತು ದೇವತೆಗಳ**

